# MANTRARATNAMAÑJÛSHÂ

BY

## TRIVIKRAMABHATTÂRAKA



EDITED

BY

WÂSUDEV LAXMAṆ SHÂSTRÎ PAṆS'ÎKAR.

Fourth Edition

PUBLISHED

BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE 'NIRNAYA-SAGAR' PRESS,

BOMBAY.

1926.

R... 10 Annas.



# मन्त्ररत्नमञ्जूषा ।



## श्रीमत्त्रिविक्रमभट्टारकप्रणीता ।

( अष्टपटलात्मको मान्त्रिकग्रन्थः )

सा चेयं

पणशीकरोपाह्वविद्वद्वरलक्ष्मणशर्मतनुजनुषा

**वासुदेवशर्मणा**

संस्कृता ।

---

मुम्बय्यां

पाण्डुरङ्ग जावजीश्रेष्ठिभिः

स्वीये "निर्णयसागराख्य" मुद्रणालये स्वायसाक्षरैरङ्कयित्वा प्रकाशिता ।

---

शाके १८४८, सन १९२६

---

मूल्यं १० आणकाः ।



# अथात्रैपत्प्रास्ताविकम्—



अयि महामहिमभाजः प्राज्ञप्रवराः, विदितमागमेव सर्वेषामिदमतिकरालेऽस्मिन्कलिकाले यद्देशनगरजनपदमण्डलपरिवृढा अपि धर्ममार्गमुल्लङ्घ्याऽधर्मेणाध्वना प्रवर्तमानाः प्रायो दरीदृश्यन्ते। ततश्च तदाश्रितोपाश्रिताः पौरा जानपदाश्चैषद्धर्मपदव्यवलम्बिनोऽपि स्वस्वप्रारब्धवशान्नियन्तृकमप्रवणीकृतस्वान्तास्तमेवाधर्मं क्रमशोऽभिवर्धयन्ति तदनुवर्तिनस्तत्तत्कौटुम्बिकास्तदाश्रितास्तदनुगाश्चेति न तिरोहितमेतत्। ततश्च शनैः शनैरुपोद्बलितोऽधर्मः प्रसह्य धर्ममन्तर्धत्ते। संजाते च क्रमादेवादृशि धर्मविप्लवे वर्णाश्रमानुसारतो विहितप्रतिपिद्धकर्मणामुपादानत्यागावगमनादस्य निर्मर्यादं यथाभिलषितमाचरन्तस्त्रिवर्गात्परिच्यवन्त इत्येव न किंतु क्लिश्यन्ति चानवरतमाध्यात्मिकाधिदैविकाधिभौतिकाख्यैः प्रत्यैस्त्रिविधैरपरिहार्यतापैः। यदा पुनः सुकृतपाकादेते निसर्गानुकम्पाऽमृतार्द्रहृदां स्वाचाराचरणैकप्रवणीकृतायुषां महर्षीणां दृष्टिपथमारोक्ष्यन्ति-यान्ति च तानत्नन्यभावेन शरणं ततः प्रभृत्येवेदं दुःखं सुखं चेदं दुःखं हेयं सुखं चोपादेयमित्यादिविचाराङ्कुरप्ररोहो भवत्येतेषां स्वान्तेषु। अथच दुःखजिहासापूर्वकं नित्यनिरतिशयसुखसाधनप्रतिपित्सूनां तेषां मानवप्राणिनां कल्याणाध्वदिदर्शयिषुभिः परमकारुणिकैर्विगलितकामादिशरीरिधातुकवर्गैः स्वाचाराचरणसार्थीकृतचतुर्वर्गैर्महर्षिभिस्तत्तत्राखिलश्रेयःसाधनं धर्मं निर्णीय सर्वोपकाराभारीरचन् अभेद्यसेतूनिव विविधान्धर्मनिबन्धान्।

अथ धर्ममार्गोऽपि द्विधा वैदिकस्तान्त्रिकश्च। स चोभयविधोऽपि गहनोऽनन्तपारोऽब्धिरिव परिपूर्णत्वेनाखिलकल्याणप्रदातृ-

त्वेन च चिरायजीति सर्वत्र । तत्राद्यो वैदिकधर्मस्तत्तद्वेदशाखाप्रशाखा-
काण्डादिप्रवर्तकतत्तत्सूत्रकारमहर्ष्यादिभिर्ग्रथितसूत्रपरिनिष्ठकारिका-
द्यनुकूलनिबन्धजातैरुपोद्बलितः सौकर्याद्बहुमिवंद्भुत्रादतो दृश्यत आसे-
तोराच हिमनगेन्द्रम् ॥ अपरस्तान्त्रिकस्तु सुनिगूढः सुदुर्बोधो दुरारा-
ध्यश्चेति लोके स्वल्पप्रचार एवासीत् । एवं सत्यपि मन्त्रशास्त्रपारदृ-
श्वभिः परमकारुणिकैर्मन्त्रशास्त्रोपरि परःशतं विरचिताः सन्ति दुरव-
बोधा महानिबन्धाः, परःसहस्रं लघवः प्रकरणग्रन्थाश्च सदुपास-
कदेशिकपरिचर्यागुरुकुलवासादिसाध्या इत्यल्पमतिभाजां दुर्विज्ञेया
एवेति विचार्याऽखिलसामान्यजनहितार्थं देशिकपदवीमारूढेन मान्त्रि-
कतत्त्वसाक्षात्कारवैभवशालिना श्रीमत्त्रिविक्रमभट्टारकेणायं मन्त्रमञ्जू-
षाभिधानो लघुप्रकरणग्रन्थो निरमायि । निबद्धं च तेन ग्रन्थान्ते—

एकरत्नं यदि प्राप्तं दैवाद्यत्नेन मानुषः ।
आत्मानं कृतकृत्यं हि मन्यते मूढचेतनः ॥
मञ्जूषां मन्त्ररत्नानां लब्ध्वा को न प्रमोदते । इति ।

अयं ग्रन्थोऽष्टपटलात्मको विविधविधानपूर्णः सर्वादरणीयः सुमङ्गलकरश्चेत्यस्माभिः संस्कृत्य मुद्रितोऽस्ति । अस्य प्रत्यन्तरकोशो नोपलभ्यः । एकमेव पुस्तकमशुद्धिस्खालित्यादिपूर्णं "सुरत" पुरीनिवासिभिः विद्वद्वरैः कृष्णशंकरकेशवरामज्योतिषी इत्याख्यया सुप्रसिद्धैरिदं प्रकरणं मुद्रणेन प्रकाशाय महादरेण प्रहितं लब्धं तस्मादेव यथामति संस्कृतं संशोधितं चास्ति । यद्यपरं कोशान्तरमस्य मानुकम्पैर्महाशयैरित ऊर्ध्वं दीयेत शोधयिष्यामस्तर्हि विशेषतः पुनर्मुद्रणावसर इति दयालवो विद्वांसः संशोध्यैव गृह्णीयुरित्यभ्यर्थ्यते—

पणशीकरोपनामधेयो—वासुदेवशर्मा ।

# अथ मन्त्ररत्नमञ्जूषाविषयानुक्रमणी ।


| विषयाः | पृष्ठं. |
|---|---|
| **प्रथमो दीक्षापटलः १** | |
| मङ्गलाचरणम् | १ |
| गुरुलक्षणम् | १ |
| शिष्यलक्षणम् | १ |
| सिद्धादिशोधनप्रकारः | १ |
| सकुलाकुलचक्रकथनम् | २ |
| मन्त्राणां बालादिभेदः | २ |
| राशिभेदकथनम् | ३ |
| नक्षत्रवर्णगणविचारः | ३ |
| मन्त्राणां शुभत्वबोधकाः | ३ |
| मन्त्राणां प्रबोधप्रकारः | ४ |
| ऋणधनशोधनम् | ४ |
| दीक्षाप्रकारः | ५ |
| क्रियावती दीक्षा | ५ |
| मन्त्रदीक्षान्यासादि | ६ |
| सकलीकरणन्यासः | ८ |
| होमद्रव्यमानम् | १० |
| द्रव्यभेदेन सिद्धिभेदः | ११ |
| होमाभावेऽनुकल्पः | ११ |
| **द्वितीयः सपर्यापटलः २** | |
| एकाक्षरगणपतिमन्त्रविधानम् | १२ |
| हेरम्बमन्त्रविधानम् | १४ |
| कुमाराख्यमन्त्रविधानम् | १४ |
| क्षिप्रगणपतिविधानम् | १५ |
| शक्तिगणपतिविधानम् | १५ |
| द्वादशाक्षरगणपतिविधानम् | १६ |
| षड्विंशत्यक्षरगणपतिविधानम् | १६ |
| महागणपतिविधानम् | १७ |
| **तृतीयः सोमसूर्याग्निमन्त्रपटलः ३** | |
| चन्द्रमसो मन्त्रविधानम् | १८ |
| घृणिमन्त्रविधानम् | १९ |
| चतुरक्षरसूर्यमन्त्रविधानम् | २१ |
| अष्टाक्षरसूर्यमन्त्रविधानम् | २१ |
| मार्तण्डभैरवविधानम् | २२ |
| दशाक्षरमन्त्रविधानम् | २२ |
| अग्निमन्त्रविधानम् | २३ |
| **चतुर्थः शैवमन्त्रविवरणपटलः ४** | |
| प्रासादमन्त्रविधानम् | २६ |
| अर्धनारीश्वरमन्त्रविधानम् | २७ |
| चण्डेश्वरमन्त्रविधानम् | २९ |
| मृत्युञ्जयमन्त्रविधानम् | २९ |
| पञ्चाक्षरशिवमन्त्रविधानम् | ३० |
| अष्टाक्षरशिवमन्त्रविधानम् | ३१ |
| अघोरास्त्रविधानम् | ३२ |
| अघोरजपप्रकारः | ३३ |
| दक्षिणामूर्तिमन्त्रविधानम् | ३३ |
| **पञ्चमः शक्तिपटलः ५** | |
| मातृकानिरूपणम् | ३४ |
| वाग्वादिनीसरस्वतीद्व्यक्षरमन्त्रविधानम् | ३५ |
| वाग्देवीषोडशाक्षरमन्त्रविधानम् | ३५ |
| वाग्देव्या एकादशाक्षरमन्त्रविधानम् | ३६ |
| अन्ये सारस्वता मन्त्राः | ३६ |

| विषयाः | पृष्ठं |
| --- | --- |
| श्रीमन्त्रविधि | ३७ |
| अपर. श्रीमन्त्रविधिः | ३८ |
| अपर. श्रीमन्त्रविधि. | ३८ |
| भुवनेश्वरीमन्त्रविधानम् | ३८ |
| द्वितीयं भुवनेश्वरीमन्त्रविधानम् | ४० |
| त्वरितभगवतीमन्त्रविधानम् | ४० |
| त्वरिताया अपरं विधानम् | ४१ |
| अपरं त्वरिताविधानम् | ४२ |
| अश्वारूढाविधानम् | ४३ |
| दुर्गामनुविधानम् | ४५ |
| महिषमर्दिनीमनुविधानम् | ४६ |
| अपरं दुर्गामनुविधानम् | ४७ |
| अन्यदुर्गामनुविधानम् | ४७ |
| अपरं दुर्गामनुविधानम् | ४८ |
| षष्ठो वैष्णवमन्त्रपटलः ६ | |
| विष्णोरष्टाक्षरमन्त्रविधानम् | ४९ |
| विष्णोर्द्वादशाक्षरमन्त्रविधानम् | ४९ |
| विष्णोश्चतुर्दशाक्षरमन्त्रविधानम् | ५० |
| विष्णोरष्टाक्षरमन्त्रविधानम् | ५० |
| विष्णोः षडक्षरमन्त्रविधानम् | ५१ |
| विष्णोर्दशाक्षरमन्त्रविधानम् | ५२ |
| त्रयस्त्रिंशदक्षरवराहमन्त्रविधानम् | ५२ |
| नृसिंहहरिमन्त्रविधानम् | ५३ |
| अष्टाक्षरश्रीकरमन्त्रविधानम् | ५४ |
| अष्टादशाक्षरगोपालमन्त्रविधानम् | ५५ |
| षडक्षरगोपालमन्त्रविधानम् | ५६ |
| दशाक्षरगोपालमन्त्र. | ५६ |
| अष्टाक्षरगोपालमन्त्र | ५६ |
| षोडशाक्षरो गोपालमन्त्र | ५६ |
| चतुर्विंशत्यक्षरो गोपालमन्त्र | ५६ |
| संतानगोपालमन्त्र | ५६ |
| कामदेवमन्त्रविधानम् | ५७ |
| सप्तमः पारिप्लवाख्यपटलः ७ | |
| सत्वारमूलविधानम् | ५८ |
| वारुणीमन्त्रविधानम् | ५९ |
| लवणमनुविधानम् | ६० |
| बृहस्पतिमनुविधानम् | ६१ |
| शुक्रमनुविधानम् | ६१ |
| वैश्वानरमनुविधानम् | ६२ |
| सर्वोत्तमन्त्रविधानम् | ६४ |
| प्रणवप्रतिष्ठाविधि | ६४ |
| कुक्कुटमन्त्रविधानम् | ६५ |
| धनपिशाचमन्त्रविधानम् | ६७ |
| अष्टमो यन्त्रपटलः ८ | |
| अत्र विविधयन्त्राणि | ६९ |
| अन्तर्मातृकाचक्र | ७१ |
| मन्त्रोद्धार | ७२ |
| मन्त्रपरिभाषा | ७३ |


समाप्तेयं मन्त्ररत्नपुष्पविषयानुक्रमणिका ।

---



# मन्त्ररत्नमञ्जूषा ।

## श्रीमत्त्रिविक्रमभट्टारकप्रणीता

---

### प्रथमो दीक्षापटलः ॥ १ ॥

प्रणम्य पार्वतीनाथं पुराणपुरुषोत्तमम् ।
क्रियते मन्त्ररत्नानां मञ्जूषा विशदा शुभा ॥ १ ॥
पटलैरष्टभिः पूर्णा सप्रयोगैः समन्त्रकैः ।
सयोगैः सरहस्यैश्च अन्यैश्चापि सकीलकैः ॥ २ ॥

तत्रादौ गुरुशिष्यलक्षणं वच्मि ॥ ॥ अथ गुरुलक्षणम् ॥ 'शान्तो दान्तः कुलीनश्च विनीतः शुद्धवेषवान् । शुद्धाचारः सुप्रतिष्ठः शुचिर्दक्षः सुबुद्धिमान् ॥ आश्रमी ध्याननिष्ठश्च मन्त्रतन्त्रविचक्षणः । निग्रहानुग्रहे शक्तो गुरुरित्यभिधीयते ॥' इति ॥ ॥ अथ शिष्यलक्षणम् ॥ 'शान्तो विनीतः शुद्धात्मा श्रद्धावान्धारणक्षमः । समर्थश्च कुलीनश्च प्राज्ञः सच्चरितो धनी ॥ एवमादिगुणैर्युक्तः शिष्यो भवति नान्यथा । गुरुता शिष्यता वापि तयोर्वत्सरवासतः ॥' इति ॥ तत्र दीक्षां विना मन्त्रग्रहणमेव न संभवति, अदीक्षितस्य प्रच्छन्नपापक्षयासंभवात् प्रक्षीणपापस्यैव मन्त्राधिकारात् दिव्य भावं ददातीति दीक्षास्वरूपत्वाच्च सम्यक् गुरोर्दीक्षां प्राप्य मन्त्रग्रहणं कर्तव्यम् । तत्रापि सिद्धसाध्यादिभेदैः स्वकुलान्यकुलादिभिः ऋणधनादिभिश्च

संशोध्यैव गुरुणा दीक्षा दातव्या ॥ ॥ सिद्धादिशोधनप्रकारः ॥ अथ शोधनप्रकारं सक्षेपेण व्याहरिष्यामः ॥ प्राक्पश्चिमाग्रं रेखापञ्चकं कृत्वा तथैव दक्षिणोत्तररेखापञ्चकं कार्यम् । तत्र प्रथमतृतीयैकादशनवकोष्ठेषु प्रथमस्वरचतुष्टयं लेख्यम् । तथैव षष्ठाष्टमषोडशचतुर्दशकोष्ठेषूत्तरस्वरचतुष्टयं लेख्यम् । पञ्चमसप्तमपञ्चदशत्रयोदशकोष्ठेष्ववशिष्टान्स्वरान्विलिख्य कादीन्वर्णांस्तेनैव क्रमेण विलिखेत् । कोष्ठेषु यो वर्णस्तत्रमालिखेत् । तत्तद्विचतुष्केषु तत्तत्पञ्चममालिखेत् । निजनामाद्याक्षरान्मन्त्राद्याक्षरपर्यन्तं प्रादक्षिण्येन सिद्धादीन्गणयेत् । तत्र सिद्धः सुसिद्धश्च स्वीकार्यः । साध्यस्तु मध्यमः । अरिस्त्याज्यः । तत्र—'सिद्धार्णा बान्धवाः प्रोक्ताः साध्यास्ते सेवकाः स्मृताः । सुसिद्धाः पोषका ज्ञेयाः शत्रवो घातका मताः ॥ सिद्धः सिद्ध्यति कालेन साध्यस्तु जपहोमतः । सुसिद्धो ग्रहमात्रेण रिपुर्मूलनिकृन्तनः ॥ सिद्धसिद्धो यथोक्तेन द्विगुणारिसिद्धसाध्यकः । सिद्धः सुसिद्धो हि(?)जपात् सिद्धारिर्हन्ति बान्धवान् ॥ साध्यसिद्धो द्विगुणजपात्साध्यसाध्यो निरर्थकः । साध्यस्तु सिद्धस्त्रिगुणात्साध्यारिर्हन्ति गोत्रजान् ॥ सुसिद्धसिद्धोऽर्धजपाद्विगुणारिसिद्धसाध्यकः । सुसिद्धस्तु महादेव तदरिर्ज्ञातिहानिकृत् ॥ अरिसिद्धः सुतान्हन्यादरिसाध्यस्तु कन्यकाः । तत्सुसिद्धस्तु पत्नीघ्नस्तदरिर्हन्ति साधकम् ॥ ज्यायत्र्येकादशाङ्कद्विचतुर्थादशपङ्क्तिषु । षष्ठाष्टाष्टिमनौ पञ्चसप्तपञ्चदशमन्मथे ॥ नृसिंहार्कवराहाणां सिद्धादीन्नैव शोधयेत् । स्वप्ने लब्धे स्त्रिया दत्ते मालामन्त्रे च त्र्यक्षरे । वैदिकेषु च सर्वेषु सिद्धादीन्नैव शोधयेत् ॥ आदावन्ते रिपुर्यस्य भवेत्त्याज्यः स मन्त्रकः । स्थानत्रयगतारिर्यो मन्त्रो मृत्युसमो मतः ॥ शत्रुर्भवति

यदादौ मध्ये सिद्धस्तदन्तके साध्यः । कोष्ठेन कार्यसिद्धिस्तस्य फलं स्वल्पमेव भवेत् ॥ अन्ते यदि भवति रिपुः प्रथमे मध्ये च भवति साध्ययुगम् । कार्यं विलम्बितं स्यात्प्रणश्यति तथाच सर्वमेवान्ते ॥ सिद्धं सुसिद्धमथवा रिपुणान्तरितं परीक्षयेद्यत्नात् । प्रह्लायासरसलितं तं मन्त्रं वर्जयेन्मतिमान्' इति ॥ ॥ अथ स्वकुलान्यकुलभेदः कथ्यते ॥ उ ऊ ॐ गजडदबलला: पार्थिवाः । ऋॠऔपझढधभवसा वारुणाः । इईऐखछठथफरक्षा आग्नेयाः । अआएकचटतपयषा मारुताः । ऌॡअङञणनमशहा नाभसाः । 'साधकस्याद्याक्षरं यन्मन्त्रस्यापि तदक्षरम् । यद्येकभूतदैवत्यं जानीयात्स्वकुलं हि तत् ॥' तथैव नक्षत्रगणनमपि स्वकुलम् । एतदकुलमपि । पार्थिवस्य वारुणं मित्रम् । आग्नेयस्यापि मारुतं मित्रम् । मारुतं पार्थिवाप्यानां शत्रुः । आग्नेयस्य चाम्भसं शत्रुः । सर्वोविरोधि नाभसम् । परस्परविरुद्धानां न कुर्यान्मेलनं बुधः इति ॥

॥ अथ मन्त्राणां बालादिभेदः कथ्यते ॥ एकाक्षरमारभ्य षोडशाक्षरपर्यन्तं बालाः । तत ऊर्ध्वं विंशतिर्यावत्प्रौढाः । ततोऽन्ये स्थविरा ज्ञेयाः ॥ ये स्वाहान्तास्ते स्त्रीरूपा ज्ञेयाः । ये च नमोन्तास्ते नपुंसकाः । ये हुंफडन्तास्ते पुमांसः ॥ ॥ अथ राशिमेलनकं कथ्यते ॥ अआइई मेषः । उऊऋॠ वृषः । ऌॡ मिथुनः । एऐ कर्कटः । ओऔ सिंहः । अंअःशषसहळक्षाः कन्या । कवर्गस्तुला । चवर्गो वृश्चिकः । टवर्गो धनुः । तवर्गो मकरः । पवर्गः कुम्भः । यरलवा मीनः । साध्यनामाक्षरराशिमारभ्य गणयेत् ॥ एकपञ्चनव धान्यदाः स्मृता द्वौ च षष्ठदशमास्तु सेवकाः । त्रीणि सप्त च भयाः सुपोषका द्वादशाष्टचतुरस्तु घातकाः ॥ ॥ अथ नक्षत्रवर्णगण-

विचारः ॥ अआ अश्विनी देवगणः । इ भरणी मनुष्यगणः । ईउऊ कृत्तिका राक्षसगणः । ऋॠऌॡ रोहिणी मनुष्यः । ए मृगशीर्षो देवः । ऐ आर्द्रा मनुष्यः । ओ औ पुनर्वसुः देवः । क पुष्यो देवः । ख ग आश्लेषा राक्षसः । ग घ मघा राक्षसः । च पूर्वा मनुष्यः । छ ज उत्तरा मनुष्यः । झ ञ हस्तः देवः । ठ ठ चित्रा राक्षसः । ड स्वाती देवः । ढ ण विशाखा राक्षसः । त थ द अनुराधा देवः । ध ज्येष्ठा राक्षसः । न प फ मूलं राक्षसः । ब पूर्वाषाढा मनुष्यः भ उत्तराषाढा मनुष्यः । म श्रवणः देवः । य र धनिष्ठा राक्षसः । ल शतभिषक् राक्षसः । व श पूर्वाभाद्रपदा मनुष्यः । ॥ स ह क्ष उत्तराभाद्रपदा मनुष्यः । अं अः लः रेवती देवः । साधकनामाक्षरात्प्रादक्षिण्येन गणयेत् । 'जन्मसंपद्विपत्क्षेमप्रत्यरं साधको वधः । मैत्रं परममैत्रं च जन्मादीनि पुनः पुनः' ॥ विपत् प्रत्यरं वधश्च त्याज्यः ॥ ॥ अथ मन्त्राणां सुप्तप्रबोधकालोऽभिधीयते ॥ तत्र सर्वे मन्त्रा द्विधा भवन्ति । प्रकृतिपुरुषरूपा उभयस्वभावाश्च । मातृकायास्तादृग्रूपत्वात् । तत्रापि स्वराः षोडश सौम्याः । स्पर्शाः सौराः । यरलवशषसहा व्यापका आग्नेयाः । स्वरा अपि ह्रस्वदीर्घनपुंसकभेदात्त्रिधा । अइउएओअं एते पद् ह्रस्वाः । आईऊऐऔअः एते पद् दीर्घाः । ऋॠऌॡश्चत्वारो नपुंसकाः ॥ ॥ प्रबोधप्रकारस्त्वयम् । यदा दक्षिणभागे वायुर्वहति तदा दक्षिणायनम् । तदानीमेव ह्रस्वाः प्रबुद्धा भवन्ति । तदाद्याश्च तत्प्रचुराश्च मन्त्राः प्रबुद्धा भवन्ति । एवं स एवेतरेषां स्वापकालः । यदा उत्तरभागे वायुर्वहति तदोत्तरायणम् । तदानीमेव दीर्घा, प्रबुध्यन्ते । तत्प्रधानाश्च तदाद्याश्च तत्प्रचुराश्च मन्त्राः प्रबुध्यन्ते । यदा चोत्तरभागाद्दक्षिणभागप्रवेशसमये

कियन्तमपि कालं वायोः स्थिरीभावस्तदा विषुवकालः। तदानीं ऌऌ इति वर्णौ प्रबुध्येते। तदा तत्प्रचुराश्च मन्त्राः प्रबुध्यन्ते। यदा दक्षिणभागादुत्तरभागप्रवेशसमये उभयत्र वायोः स्थिरीभावस्तदा ॠऋ इति वर्णौ प्रबुध्येते तत्प्रधानाश्च मन्त्राः। अथवा प्राणापान-समरसीकरणेन मूलाधारादुच्छ्वसन्तीं विद्युत्ततिविततां झटितिशेष-चक्राक्रमणीं निरवधिमहानन्दाब्धिप्रणालिकां कुण्डलशक्तिं समुत्थाप्य शिवशक्तिसामरस्यमास्थितस्य कस्यापि या अद्वितीयाऽपरिमितानन्दचमत्कारदशा सा सर्वमन्त्राणां प्रबोधकालः। एतदन्योऽप्रबोधकालः। जपश्च सर्वमन्त्राणां प्रबोधकाल एव। मन्त्रोपदेशाश्च मातृकाक्षराणि लकारपर्यन्तं सानुस्वाराणि साध्यमन्त्रेण प्रत्येकं संपुटीकृत्य क्षकारं केवलमुच्चार्य पुनर्लकारादीनि सविसर्गाणि संपुटीकृत्य जपे क्रियमाणे मन्त्रः शीघ्रं सफलो भवति॥ ॥ अथ ऋणधन-शोधनं कथ्यते॥ 'इन्द्रर्क्षनेत्ररविपञ्चदशर्तुवेदवह्न्यायुधाष्टनव-भिर्गुणितांश्च साध्यान्। दिग्भूगिरिश्रुतिगजाग्निमुनीषुवेदषड्वह्निभिश्च गुणितानथ साधकार्णान्॥ नामाङ्कलादकठवाङ्कजभक्तशेषं द्वास्तोभ-योरधिकशेषयुतं ऋणं स्यात्॥' अस्यार्थः—साध्यनामाक्षराणि स्वर-व्यञ्जनरूपेण पृथक्कृत्वा प्रत्यक्षरं इन्द्रादिभिरङ्कैर्यथासंख्येन गुणयेत्। कथम्। इन्द्र १४ ऋक्ष २७ नेत्र २ रवि १२ पञ्चदश १५ ऋतु ६ वेद ४ वह्नि ३ आयुध ८ अष्ट ८ नव ९ एतैरिति यावत्। तथा साधकनामाक्षराणि स्वरव्यञ्जनरूपेण पृथक्कृत्वा दिगादिभिरङ्कैर्गुणयेत्। कथम्। दिक् १० भूमि १ गिरि ७ श्रुति ४ गज ८ अग्नि ३ मुनि ७ इषु ५ वेद ४ षट् ६ वह्नि ३ एतैरङ्कैरित्यर्थः। नामाङ्कलादित्यस्यायमर्थः। स्वाक्षरव्यञ्जनसमुदायात्

अकठनात् वर्गचतुष्टयप्रभिन्नात् । अ १ इ २ उ ३ ऋ ४ ऌ ५ ए ६ ऐ ७ ओ ८ औ ९ अं १० अः ११ एते अवर्गः । क १ ख २ ग ३ घ ४ ङ ५ च ६ छ ७ ज ८ झ ९ ञ १० ट ११ कवर्गः । ठ १ ड २ ढ ३ ण ४ त ५ थ ६ द ७ ध ८ न ९ प १० फ ११ ठवर्गः । ब १ भ २ म ३ य ४ र ५ ल ६ व ७ श ८ ष ९ स १० ह ११ बकारादिहकारान्तो बवर्गः । एते एकादशैकादशाक्षराश्चत्वारो वर्गाः । एतद्रूपात्समुदायात्पश्चादष्टभिर्भागे हृते सति उभयोः साध्यसाधकवर्गयोः शेषस्याधिकरूपस्य ऋणं धन च ज्ञात्वा मन्त्र दद्यात् । तथा राशिष्वपि—'लग्न धन भ्रातृबन्धुपुत्रशत्रुकलत्रकाः । मरण धर्मकर्मायव्यया द्वादश राशयः' । एवं गणनाया स्वराशिमारभ्य मन्त्रराशिपर्यन्तं शत्रु-मरण-व्ययाः षष्ठाष्टमद्वादशाः परित्याज्याः । अन्ये स्वीकार्याः ॥

अथ दीक्षाप्रकारः ॥ एव सुदिनवारनक्षत्रकरणक्षेत्रेषु यथाशास्त्रं परिशोध्य दीक्षा दातव्या सर्वसपत्समृद्ध्यर्थं पापापनुत्त्यर्थं च । सा च दीक्षाऽनेकप्रकारा क्रियामयी वर्णमयी वेधकलामयीत्यादि ॥

॥ क्रियामयी दीक्षा ॥ तत्र सर्वसमतत्वात् सर्वसाधारणत्वात् प्रधानत्वाच्च क्रियामयी सक्षेपतः प्रदर्श्यते जगतो हिताय । शुभानुकूलसमये शास्त्रोक्तविधिना आदौ वास्तुपूजामारभेत् । यथा—'ततो भूमितले शुद्धे तुषाङ्गारादिवर्जिते पुण्याह वाचयित्वा विप्राशिषा सह शास्त्रोदितमण्डप विरचय्य तन्मध्ये वेदिकाया वा स्थण्डिले वा सर्वतोभद्रात्मक मण्डल अन्यद्वा यथाशास्त्रं विरचय्य चतुर्दिक्षु शास्त्रोक्तलक्षणयुक्तानि कुण्डानि प्रकल्पयेत् । अथवोत्तरस्या दिशि चतुरस्र सर्वसाधारण सर्वसमतमेकं कुण्ड मेखलात्रययुत तत्पश्चिमाया दिशि मेखलोपरि यथोक्ता योनिं परि-

कल्प्य गुरुः शुद्धात्मा प्राङ्मुख उदङ्मुखो वा मृद्वासन उपविशेत् । समाहितेन्द्रियो मौनी गोमयेनोपलिप्ते कुण्डमध्ये नाभिस्थाने स्वगृह्योक्तप्रकारेण पट्रेखा वा षट्कोणं वा त्रिकोणं वा विलिख्य । स्थापयेद्दक्षिणे भागे पूजाद्रव्याणि यत्नतः । शुभोदकसमायुक्तं पूर्णकुम्भं ततः पुरः । ततः सुमनसः पात्रं परितो घृतप्रज्वलितान्दीपान्शुभान् पुरतः शङ्खं साधारं परितोऽङ्कुरपात्राणि अन्यान्यपि यथाक्रमं पश्चात्स्थापयित्वा निजवामदक्षिणपार्श्वयोर्गुरुं गणेशं च तथा भूतशुद्धिमथाचरेत् ॥ यथोक्तम्—'प्राणायामं ततः कृत्वा मातृकास्तत्र विन्यसेत् । षडङ्गन्यासं च ततः (?) । कृत्वा कल्पोक्तविधिना तत्तन्न्यासान्समारभेत् । तत्र मण्डपमध्ये धर्मादिपीठपूजानन्तरमावरणपूजां विधाय हेमरजतताम्रमृन्मयकलशानां मध्येऽन्यतमं यथालाभं सम्यक्प्रक्षालितान्तरं कर्पूरागुरुधूपितं शोभनाकृतिं सुलक्षणं त्रिसूत्रवेष्टितं नवपल्लवयुग्मेन च गन्धादिभिरभ्यर्चितं नवरत्नोदरं दूर्वाक्षतसमन्वितं तारमुच्चारयन् मन्त्री कर्णिकाया मध्येऽधोमुखं स्थापयेत् । पश्चादुत्तानं कृत्वा पीठस्य कलशस्य चैक्यं संसाधयेद्धिया । प्रोक्तकषायोदकैस्तीर्थोदकैर्वान्यैः शुद्धतरैर्वा जलैः कर्पूरगन्धपुष्पवासितैः प्रतिलोमेन मातृकां जपन् तथैव मूलमन्त्रं च जपन् पूरयेत्कलशं देवताधिया । ततः शङ्खे कषायाम्बुपूरिते शुद्धतोये नवाष्टगन्धं समालोड्य आवाह्य च कलाः सुधीः । तद्यथा—ॐ अं अमृतायैनमः । अमृतामावाहयामि इत्यमृतामावाह्य जलगन्धादिभिः संपूज्य । अमृतायाः प्राणा इह प्राणाः इत्यादिप्रकारेण प्राणप्रतिष्ठां च कृत्वा ॐ आं मानदायैनमः । ॐ इं पूषायैनमः । ॐ ईं तुष्ट्यैनमः । ॐ उं पुष्ट्यै नमः । ॐ ऊं रत्यैनमः । ॐ ऋं धृत्यैनमः । ॐ ॠं शशिन्यैनमः ।

अकठवात् वर्गचतुष्टयप्रभिन्नात् । अ १ इ २ उ ३ ऋ ४ ऌ ५ ए ६ ऐ ७ ओ ८ औ ९ अं १० अः ११ एते अवर्गः । क १ ख २ ग ३ घ ४ ङ ५ च ६ छ ७ ज ८ झ ९ ञ १० ट ११ कवर्गः । ठ १ ड २ ढ ३ ण ४ त ५ थ ६ द ७ ध ८ न ९ प १० फ ११ ठवर्गः । ब १ भ २ म ३ य ४ र ५ ल ६ व ७ श ८ ष ९ स १० ह ११ बकारादिहकारान्तो बवर्गः । एते एकादशैकादशाक्षराश्चत्वारो वर्गाः । एतद्रूपात्समुदायात्पक्षादष्टभिर्भागे हृते सति उभयोः साध्यसाधकवर्गयोः शेषस्याधिकरूपस्य ऋणं धनं च ज्ञात्वा मन्त्रं दद्यात् । तथा राशिष्वपि—'लग्नं धनं भ्रातृबन्धुपुत्रशत्रुकलत्रकाः । मरणं धर्मकर्मायव्यया द्वादश राशयः' । एवं गणनायां स्वराशिमारभ्य मन्त्रराशिपर्यन्तं शत्रु मरण-व्यायाः षष्ठाष्टमद्वादशाः परित्याज्याः । अन्ये स्वीकार्याः ॥

अथ दीक्षाप्रकारः ॥ एवं सुदिनवारनक्षत्रकरणक्षेत्रेषु यथाशास्त्रं परिशोध्य दीक्षा दातव्या सर्वसपत्समृद्ध्यर्थं पापापनुत्त्यर्थं च । सा च दीक्षाऽनेकप्रकारा क्रियामयी वर्णमयी वेधकलामयीत्यादि ॥

॥ क्रियामयी दीक्षा ॥ तत्र सर्वसमतत्वात् सर्वसाधारणत्वात् प्रधानत्वाच्च क्रियामयी संक्षेपतः प्रदर्श्यते जगतो हिताय । शुभानुकूलसमये शास्त्रोक्तविधिना आदौ वास्तुपूजामारभेत् । यथा—'ततो भूमितले शुद्धे तुषाङ्गारादिवर्जिते पुण्याहं वाचयित्वा विप्राशिषा सह शास्त्रोदितमण्डपं विरचय्य तन्मध्ये वेदिकायां वा स्थण्डिले वा सर्वतोभद्रात्मकं मण्डलं अन्यद्वा यथाशास्त्रं विरचय्य चतुर्दिक्षु शास्त्रोक्तलक्षणयुक्तानि कुण्डानि प्रकल्पयेत् । अथवोत्तरस्यां दिशि चतुरस्रं सर्वसाधारणं सर्वसमतमेकं कुण्डं मेखलात्रययुतं तत्पश्चिमायां दिशि मेखलोपरि यथोक्तां योनिं परि-

कल्प्य गुरुः शुद्धात्मा प्राङ्मुख उदङ्मुखो वा मृद्वासन उपविशेत् । समाहितेन्द्रियो मौनी गोमयेनोपलिप्ते कुण्डमध्ये नाभिस्थाने स्वगृह्योक्तप्रकारेण षट्रेखा वा षट्कोणं वा त्रिकोणं वा विलिख्य । स्थापयेद्दक्षिणे भागे पूजाद्रव्याणि यत्नतः । शुभोदकसमायुक्तं पूर्णकुम्भं ततः पुरः । ततः सुमनसः पात्रं परितो धृतप्रज्वलितान्दीपान्शुभान् पुरतः शङ्खं साधारं परितोऽङ्कुरपात्राणि अन्यान्यपि यथाक्रमं पश्चात्स्थापयित्वा निजवामदक्षिणपार्श्वयोर्गुरुं गणेशं च नत्वा भूतशुद्धिमथाचरेत् ॥ यथोक्तम्—'प्राणायामं ततः कृत्वा मातृकास्तत्र विन्यसेत् । षडङ्गन्यासं च ततः (?) । कृत्वा कल्पोक्तविधिना तत्तन्न्यासान्समारभेत् । तत्र मण्डपमध्ये धर्मादिपीठपूजानन्तरमात्मपूजां विधाय हेमरजतताम्रमृन्मयकलशानां मध्येऽन्यतमं यथालाभं सम्यक्प्रक्षालितान्तरं कर्पूरागुरुधूपितं शोभनाकृति सुलक्षणं त्रिसूत्रवेष्टितं नववस्त्रयुग्मेन च गन्धादिभिरभ्यर्चितं नवरत्नोदरं दूर्वाक्षतसमन्वितं तारमुच्चारयन् मन्त्री कर्णिकाया मध्येऽधोमुखं स्थापयेत् । पश्चादुत्तानं कृत्वा पीठस्य कलशस्य चैक्यं संसाधयेद्धिया । प्रोक्तकषायोदकैस्तीर्थोदकैर्वान्यैः शुद्धतरैर्वा जलैः कर्पूरगन्धपुष्पवासितैः प्रतिलोमेन मातृकां जपन् तथैव मूलमन्त्रं च जपन् पूरयेत्कलशं देवताधिया । ततः शङ्खे कषायाम्बुपूरिते शुद्धतोये नवाष्टगन्धं समालोड्य आवाह्य च कलाः सुधीः । तद्यथा—ॐ अं अमृतायैनमः । अमृतामावाहयामि इत्यमृतामावाह्य जलगन्धादिभिः संपूज्य । अमृतायाः प्राणा इह प्राणाः इत्यादिप्रकारेण प्राणप्रतिष्ठां च कृत्वा ॐ आं मानदायैनमः । ॐ इं पूषायैनमः । ॐ ईं तुष्ट्यैनमः । ॐ उं पुष्ट्यैनमः । ॐ ऊं रत्यैनमः । ॐ ऋं धृत्यैनमः । ॐ ॠं शशिन्यैनमः ।

ॐ लृं चन्द्रिकायैनमः । ॐ लॄं कान्त्यैनमः । ॐ एं ज्योत्स्नायै नमः । ॐ ऐं श्रियैनमः । ॐ ओं प्रीत्यैनमः । ॐ औं गदायै नमः । ॐ अं पूर्णायै नमः । ॐ अः पूर्णामृतायै नमः । एतासां च पूर्वोक्तप्रकारेण प्राणप्रतिष्ठां पूजां च कृत्वा अनन्तरं ॐ कं भः तपिन्यैनमः तपिनीमावाहयामीत्याधारा तपिन्याः प्राणा इह प्राणाः इत्यादिप्राणप्रतिष्ठां पूजां च कृत्वा । ॐ खं बं तापिन्यै नमः । ॐ गं फं धूम्रायैनमः । ॐ घं पं मरीच्यैनमः । ङं नं ज्वालिन्यैनमः । ॐ चं धं रुच्यैनमः । ॐ छं दं सुषुम्णायै नमः । ॐ जं थं भोगदायैनमः । ॐ झं तं विश्वायैनमः । ॐ ञं णं बोधिन्यैनमः । ॐ टं ढं धरण्यैनमः । ॐ ठं डं उमायैनमः । एतासां पूर्वोक्तप्रकारेण पूजां प्रतिष्ठां च कृत्वा । ॐ यं धूम्रायैनमः । ॐ रं अर्चिष्यैनमः । ॐ लं ऊष्मायैनमः । ॐ वं ज्वलिन्यैनमः । ॐ शं ज्वालिन्यैनमः । ॐ षं विस्फुलिङ्गायै नमः । ॐ सं सुश्रियैनमः । ॐ हं सुरूपायैनमः । ॐ ळं कपिलायैनमः । ॐ क्षं हव्यवाहनायैनमः । इत्यभ्यर्च्य प्राणप्रतिष्ठां च कृत्वा । अनन्तरं ॐ कं सृष्ट्यैनमः । ॐ खं ऋद्ध्यैनमः । ॐ गं स्मृत्यैनमः । ॐ घं मेधायै नमः । ॐ ङं कान्त्यैनमः । ॐ चं लक्ष्म्यैनमः । ॐ छं द्युत्यैनमः । ॐ जं स्थिरायैनमः । ॐ झं स्थित्यैनमः । ॐ ञं सिद्ध्यैनमः । अंनम इत्यादिप्रकारेण संपूज्य प्रत्येकं प्राणप्रतिष्ठां च कृत्वा अनन्तरं । ॐ टं जरायैनमः । ॐ ठं पालिन्यैनमः । ॐ डं शान्त्यैनमः । ॐ ढं ऐश्वर्यैनमः । ॐ णं क्रत्यैनमः । ॐ तं कामिकायैनमः । ॐ थं वरदायैनमः । ॐ दं ह्लादिन्यैनमः । ॐ धं प्रीत्यैनमः । ॐ नं दीर्घायैनमः । इति जलादिभिः संपूज्य प्रत्येकं प्राणप्रतिष्ठां च

कृत्वा। आसां प्रत्येकं-प्रतद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा। इति पठित्वा ऋचमावाहयामीत्यावाह्य ऋचं पूजयामीति पूजयित्वा ऋचः प्राणा इह प्राणाः इत्यादिप्रकारेण प्राणप्रतिष्ठां च कृत्वा। अनन्तरं ॐ पं तीव्रायैनमः। ॐ फं रौद्रायैनमः। ॐ बं भद्रायैनमः। ॐ भं निद्रायैनमः। ॐ मं तन्द्रायैनमः। ॐ यं क्षुधेनमः। ॐ रं क्रोधिन्यैनमः। ॐ लं क्रियायैनमः। ॐ वं उल्कायैनमः। ॐ शं मृत्यवेनमः। इत्यादिप्रकारेण जलादिभिः संपूज्य प्रत्येकं त्र्यम्बकं यजामहे–इति ऋचं पठित्वा ऋचमावाहयामीत्यावाह्य प्राणप्रतिष्ठां च कृत्वा। अनन्तरं ॐ पं पीतायैनमः। ॐ सं श्वेतायैनमः। ॐ हं अरुणायैनमः। ॐ ळं असितायैनमः। ॐ क्षं अनन्तायैनमः। इत्यादिप्रकारेण प्रत्येकमावाह्य संपूज्य प्राणप्रतिष्ठां च कृत्वा। प्रत्येकं गायत्रीं च पठित्वा संपूज्य प्राणप्रतिष्ठां च कृत्वा। अनन्तरं ॐ अं निवृत्त्यैनमः। ॐ आं प्रतिष्ठायैनमः। ॐ इं विद्यायैनमः। ॐ ईं शान्त्यैनमः। ॐ उं इन्धिकायैनमः। ॐ ऊं दीपिकायैनमः। ॐ ऋं रेचिकायैनमः। ॐ ॠं मोचिकायैनमः। ॐ ऌं सूक्ष्मायैनमः। ॐ ॡं असूक्ष्मायैनमः। ॐ एं सूक्ष्मायैनमः। ॐ ऐं ज्ञानायैनमः। ॐ ओं अमृतायैनमः। ॐ औं आप्यायिन्यैनमः। ॐ अं व्यापिन्यैनमः। ॐ अः व्योमरूपायैनमः। इत्यादिप्रकारेणावाह्य संपूज्य प्राणप्रतिष्ठां च कृत्वा प्रत्येकं ॐ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु। आसिंचतु प्रजापतिर्धाता गर्भं दधातु ते। इति पठित्वा ऋचमावाहयामीत्यावाह्य संपूज्य ऋचः प्राणा इह प्राणा इत्यादि प्राणप्रतिष्ठां च कृत्वा चतुर्नवतिमन्त्रान्

शङ्खजले मूलमन्त्रमुच्चारयन्कलशे निक्षिपेत् । अनन्तरमश्वत्थादि-कोमलपल्लवैः इन्द्रवल्लीसमारब्धैः सुरतरुधिया कुंभमुखे निधाय वेष्टयेत् । नूतनसूक्ष्मवासोभ्यां च शेषमपि साक्षतं सफलं रजतादि यथालाभं सुरद्रुमफलबुद्ध्या । पुनः कलशगतदेवं साङ्गं सावरणं साध्यमन्त्रानुरूपतः संकलीकृत्य च गुरूपचारान्समाचरेत् नैवेद्यान्तान् तत्तन्मुद्रासहितान् ॥ मुद्राश्च—आवाहन—स्थापन—संनिधापन—संनिरोधन—अवगुण्ठन—संकलीकरण—अमृतीकरणाद्याः । ततो नैवेद्यमनुद्धृत्य होमकर्मसमारभेत् ॥ ॥ संकलीकरणन्यासः ॥ कथं संकलीकरणन्यासः । उपलिप्य कुण्डं स्वासन उपविश्य आचान्तः प्राणानायम्य न्यासपूर्वकं स्वगृह्योक्तप्रकारेण पट्टरेखा विलिखेत् । अथवा षट्कोणं वृत्तं त्रिकोणं वा विलिख्य तत्र ऋतुमतीं शिवां शिवेनाधिष्ठिता सकलजगन्मयीं शक्तिं विचिन्त्य दीक्षाङ्गभूतहोमं करिष्य इति संकल्पपूर्वकं तद्योनौ मणिभवगृहोच्छ्रितमेव वह्निं वाग्भुच्चारयन् स्वाभिमुखं क्षिपेन्मन्त्रिवरः । ततः—किंचित्पिङ्गलछोहिताक्ष सर्वकर्माणि साधयसाधय हनहन दहदह पचपच स्वाहेति मन्त्रेणाग्निं प्रज्वाल्य । अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् । सुवर्णवर्णमनलं समिद्धं विश्वतोमुखम् । इत्युपस्थाय । ॐ भ्र्यूं पद्मरागायैनमः । इति लिङ्गे न्यसेत् । ॐ भ्र्यूं सुवर्णायैनमः इति गुदे । ॐ भ्र्यूं भद्रलोहितायैनमः इति मूर्धनि । ह्म्यूं श्यामायैनमः इति आस्ये । ॐ ल्र्यूं श्वेतायै नमः इति नासिकायाम् । ॐ प्र्यू धूमिन्यैनमः इति नेत्रयोः । ॐ भ्र्यूं करात्यै नम इति सर्वाङ्गेषु सप्तजिह्वा विन्यस्य । ततः सहस्रार्चिषे हृदयाय नमः । ॐ स्वस्तिपूर्णाय शिरसे स्वाहा । ॐ उत्तिष्ठ पुरुषाय शिखायै वषट् । ॐ धूमव्यापिने कवचाय हुं । ॐ

सप्तजिह्वाय नेत्रत्रयाय वौषट् । ॐ धनुर्धराय अस्त्राय फट् । इति तत्तत्स्थानेषु षडङ्गन्यासं कृत्वा वह्नेरपि तदनन्तरं षडङ्गं । ॐ अग्नये जातवेदसेनम इति मूर्ध्नि । ॐ अग्नये सप्तजिह्वाय नम इति वामांसे । ॐ अग्नये हव्यवाहनाय नम इति वामपार्श्वे । ॐ अग्नये अश्वोदरजाय नम इति वामकटिभागे । ॐ अग्नये वैश्वानराय नम इति लिङ्गे । ॐ अग्नये कौमारतेजसे नम इति दक्षिणकटिभागे । ॐ अग्नये विश्वमुखाय नम इति दक्षिणपार्श्वे । ॐ अग्नये देवमुखाय नम इति दक्षिणांसे न्यसेत् । अष्टमूर्तीर्वह्नेरेवं विन्यस्य ततः परिसमूहनपरिस्तरणपरिषेकादिकं कृत्वा । ॐ वैश्वानरजातवेद इहावह लोहिताक्ष सर्वकर्माणि साधयस्वाहा । इत्यनेन जलगन्धपुष्पधूपदीपनैवेद्यादिभिरग्निं संपूज्य जिह्वामन्त्रैर्जिह्वाः संपूज्य अङ्गमन्त्रैरङ्गानि मूर्तिमन्त्रैर्मूर्तीः संपूज्य वक्ष्यमाणक्रमेण वह्निं ध्यायेत् ।

॥ अग्निध्यानम् ॥ दक्षिणाधःकरमारभ्य प्रादक्षिण्येन वरदशक्तिस्वस्तिकाभयसहितं चतुर्बाहुं त्रिनेत्रमरुणजटाबद्धमौलिं शुभ्रवस्त्रमरुणं सर्वालंकारभूषितं अम्भोजसंस्थं वह्निं ध्यायेत् । जिह्वा ज्वालारुचो ज्ञेया वरदाभयहस्तकाः स्वस्वनामसदृक्षाः । अङ्गानि मूर्तयश्च शक्तिस्वस्तिकहस्ता ध्यातव्याः अनन्तरमाज्यसंस्कारान्तं कर्म स्वगृह्योक्तप्रकारेण कृत्वा तेनाज्येन स्रुवा व्याहृतिभिर्व्यस्ताभिः समस्ताभिर्हुत्वा ॐ वैश्वानराय जातवेद इहावहेति पूर्वोक्तमन्त्रेण त्रिभिर्हुत्वा अनन्तरं वह्नेर्गर्भाधानपुंसवनसीमन्तजातकर्मनामकरणनिष्क्रमणान्नप्राशनचौलोपनयनप्राजापत्यसौम्याग्नेयवैश्वदेवताख्यानि वेदव्रतानि चत्वारिसमावर्तनविवाहान्तानि त्रीण्येतानि प्रत्येकं साधयन् प्रणवेनाष्टाष्टाहुतीराज्येन जुहुयात् । पुनर्जिह्वामन्त्रैरङ्गमन्त्रैर्मूर्तिमन्त्रैश्च प्रत्येकमेकैक-

वारमाज्येन स्वस्वनामपूर्वकं चतुर्थीनमोन्तैर्हुत्वा मध्यस्थायां जिह्वायां महागणपतिमन्त्रेण वक्ष्यमाणप्रकारेण दशाहुतीर्हुत्वा। यथा—ॐ स्वाहा १। ॐ श्रीस्वाहा २। ॐ श्रीह्रींस्वाहा ३। श्रीह्रींक्लींस्वाहा ४। ॐ श्रीह्रींक्लींग्लौंस्वाहा ५। ॐ श्रीह्रींक्लींग्लौंगंस्वाहा ६। ॐ श्रीह्रींक्लींग्लौंगं गणपतयेस्वाहा ७। ॐ श्रीह्रींक्लींग्लौंगं गणपतये-वरवरदस्वाहा ८। ॐ श्रीह्रींग्लौंगं गणपतयेवरवरदसर्वजनंमेस्वाहा ९। ॐ श्रीह्रींक्लींग्लौंगंगणपतयेवरवरदसर्वजनंमेवशमानयस्वाहा १०। इत्थं दशाहुतीर्हुत्वा पुनः समस्तेन चतुर्वारमाज्येन जुहुयात्। पुनः साध्यमन्त्रेण पञ्चविंशतिवारान्हुत्वा पुनश्च महाव्याहृतिभि-र्हुत्वा। महाव्याहृतयश्च—ॐ भूरग्नये च पृथिव्यै च महते च स्वाहा। ॐ भुवो वायवे चान्तरिक्षाय च महते च स्वाहा। ॐ स्वरादित्याय च दिवे च महते च स्वाहा। ॐ भूर्भुवः स्वश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा। पुनर्ब्रह्मार्पणमनुना एका-माज्याहुतिं हुत्वा। इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्न-सुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा। इति ब्रह्मार्पणमनुः। अनन्तरं—पूर्णाहुतिमुत्तमां जुहोति। सर्वं वै पूर्णाहुतिः। सर्वमेवाप्नोति। अथो इयं वै पूर्णाहुतिः। अस्यामेव प्रतितिष्ठति। इत्यनेन पूर्णाहुतिं हुत्वा परिषेचनपूर्वकं होमं समाप्य अग्निमात्मन्यारोप्य देशिकः पश्चान्मण्डले बलिमाहरेत्। पयोऽम्भसा राशिनक्षत्रतिथिकरणादीनां चतुर्थीनमोन्तैः स्वस्वनामभिर्मन्त्रैर्बलिर्न-मम इति प्रत्येकं। अथवा सर्वेभ्यः परिवारदेवताभ्यो बलिर्नमम इति वा। ततो नैवेद्यमुद्धृत्य पूर्ववद्गन्धादिभिः परिपूज्य। मुखवा-सादिकं दत्वा दण्डवत्प्रणमेद्भुवि। इति।

## होमद्रव्यमानम् ।

प्रसङ्गादन्यदपि किंचिन्निरूप्यते होमद्रव्याणां परिमाणादि प्रकृतोपयोगितया । घृतं कर्षमात्रम् । शुक्तिमात्रं पयस्तत्समं मधु पञ्चगव्यमपि । दुग्धान्नमक्षमात्रम् । दधि प्रसृतिमात्रम् । लाजाः स्युर्मुष्टिसंमिताः । तावत्पृथुकाः सक्तवः । गुडं पलार्धमानम् । शर्करापि । ग्रासार्धमन्नम् । इक्षुः पर्वावधिः । एकैकं पत्रपुष्पाणि तथा अपूपा अपि कदल्यादिफलानि च । मातुलुङ्गं चतुःखण्डं पनसं दशधा विदुः । अष्टधा नारिकेलं स्यात्त्रिखण्डं बिल्वमुच्यते । तथैवोर्वारुकमपि । फलान्यन्यान्यखण्डानि समिधः स्युर्दशाङ्गुलाः । दूर्वात्रयं समुद्दिष्टं गुडूची चतुरङ्गुला । व्रीहिमाषयवमुद्गकोद्रवगोधूमकलमा अपि मुष्टिमात्रकाः । तण्डुलास्तदर्धं । तिलसर्षपाश्चुलुकमात्राः । शुक्तिमात्रं लवणं । मरीचान्यपि विंशतिः । गुग्गुलं बदरमात्रं रामठं च तत्समम् । चन्दनागुरुकर्पूरकुङ्कुमानि तिन्त्रिणीबीजमानानि समुद्दिष्टानि देशिकैः । इति होमद्रव्यप्रमाणम् ॥ ॥ द्रव्यभेदेनाग्निध्यानभेदः ॥

'वैश्वानरं स्थितं ध्यायेत्समिद्धोमे तु देशिकः । शयानमाज्यहोमे तु निषण्णं शेषवस्तुषु ॥ अस्यान्तर्जुहुयाद्वह्नेः सर्वहोमेषु देशिकः । कर्णहोमे भवेद्व्याधिर्नेत्रेऽन्धत्वं च जायते ॥ नासिकायां मनःपीडा मस्तके धनसंक्षयः । स्वर्णसिन्दूरबालार्ककुङ्कुमक्षौद्रसन्निभः ॥ सुवर्णरेतसो वर्णः शोभनः समुदाहृतः । भेरीवारिदहस्तीन्द्रध्वनिर्वह्नेः शुभावहः ॥ नागचम्पकपुंनागपाटलीयूथिकानिभः । पद्मेन्दीवरकह्लारसर्पिर्गुग्गुलसंनिभः ॥ पावकस्य शुभो गन्धः………। प्रदक्षिणास्तफकम्पाश्छत्राभाः शिखिनः शुभाः ॥ शुभदा यजमानस्य राज्ञश्चापि विशेषतः । कुन्देन्दुधवलो धूमो वह्नेः प्रोक्तः शुभावहः ॥

कृष्णः कृष्णगतेर्वर्णो यजमानं विनाशयेत् । श्वेतो राष्ट्रं निहन्त्याशु वायसस्वरसंनिभः ॥ खरस्वरसमो वह्नेर्ध्वनिः सर्वविनाशकृत् । पूतिगन्धो हुतभुजो होतुर्दुःखप्रदो भवेत् ॥ छिन्नवृत्ता शिखा कुर्यान्मृत्युं धनपरिक्षयम् ॥ शुकपक्षसमो धूमः पारावतसमप्रभः । हानिं तुरगजातीनां गवां च कुरुतेऽचिरात् ॥ एवंविधेषु दोषेषु प्रायश्चित्ताय देशिकः ॥ मूलेनाज्येन जुहुयात्पञ्चविंशतिराहुती ॥ इदानीं मत्र विस्तरभयादुपरम्यते ॥ ॥ होमाभावेऽनुकल्पः ॥ होमाभावेऽथवा पुष्पैः पूरयित्वाञ्जलिं इष्टदेवताप्रीत्यैं दद्यान्मूलमन्त्रमुच्चारयन् । ततोऽन्यमण्डले शिष्यमुपवेश्य यथाविधि । नद्दत्सु पञ्चवाद्येषु सार्धं विप्राशिषा गुरुः ॥ विधिवत्कुम्भमुद्धृत्य तत्पञ्चपल्लवा-न्तर्हितशिरसं सुरसं सुस्थिरं सुनियतं प्राङ्मुखोपविष्टं देवतामनुस्मरन्गुरुः शिष्यमभिषिञ्चेत् यथार्थवत्प्रतिलोममातृकां प्रजपन् तथैव मूलमन्त्रमपि । अनन्तरं गुरुणाभिषिक्तः शिष्यो वाससी परिधाय आचम्य च स्वलङ्कृतो नमस्कृत्य गुरुं तस्मै यथाशास्त्रं दक्षिणां दत्त्वा निविश्य गुरुसंनिधौ पूर्वाभिमुखो मौनी भवेत् । ततः सुदेशिकः शिष्यं समवहितं दत्तदक्षिणं दिव्यदृशा विलोक्य तस्मिन्न परं देवतामावाह्य सकलीकृत्य तयोरैक्यं धिया स्मरन् गन्धपुष्पादैरलंकृत्य तस्मै विद्यां यथावद्दद्यात् । ऋष्यादिध्यानपूर्वकं मन्त्रं दक्षिणकर्णदेशे त्रिशो वदेत् । गुरोर्लब्ध्वा विद्यां पुनर्जपेन् शिष्यस्तत्संनिधावेव शतावधि । अथवाष्टाविंशतिवारं गुरुदेवतामन्त्राणामैक्यं समाश्रयन् । प्रणमेद्दण्डवद्भूमौ स गुरुं देवतात्मकम् । तथाच तत्पादपद्मं निजमूर्धनि योजयेत् । शरीरमर्थं प्राणांश्च सर्वं तस्मै निवेदयेत् । अथवा गन्धपुष्पाद्यैर्वस्त्रालंकाराद्यैश्च गुरुं समीणयेत्

वित्तशाठ्यं विना । तत:प्रभृति कुर्वीत गुरोः प्रियमनन्यधीः । ऋत्विग्भ्यो दक्षिणां दद्याद्यथावित्तं विशालधीः ॥ ब्राह्मणांस्तर्पयेत्पश्चाद्दक्षिणाभिर्यथेच्छया ॥ संक्षेपतोऽसौ विधिवच्च दीक्षा क्रियावती लोकहिताय पुण्या । ददाति पुंसामिह दिव्यभावं क्षिणोति पापानि भवेच्च दीक्षा ॥ वेधादिदीक्षाप्रकारश्च तन्त्रान्तरेऽनुसंधातव्यः संग्रहाधिकारादिह नोक्त इत्यदोषः ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीरामभारतीश्रीचरणपूज्यचरणशिष्यस्य भगवतस्त्रिविक्रमभट्टारकस्य कृतौ मन्त्ररत्नमञ्जूषायां दीक्षापटलः ॥ १ ॥

---

## अथ द्वितीयः सपर्यापटलः ॥ २ ॥

रत्नाकरसहस्रेषु गम्भीरेषु सुगोपितान् । तन्त्रान्तरेषु सर्वेषु देशिकेन्द्रैः प्रयत्नतः ॥ तानादाय यथान्यायं स्थाप्यन्तेऽत्र मयाधुना । त्रिविक्रमाह्वयविना देशिकेन्द्रेण धीमता ॥ मञ्जूषाख्ये हि तन्त्रेऽस्मिन्नमूतान्महामनून् । साङ्गांस्तथा सावरणान्प्रयोगसहितानपि ॥ विदुषां कौतुकार्थं च बालानां हितकाम्यया ॥ ॥ अथैकाक्षरगणपतिविधानम् ॥ तत्र प्रथमं गाणपत्यानां विधानमुपवर्ण्यते ॥ ॐ गं इत्येकाक्षरगणपतिमन्त्रस्य गणकऋषि निचृच्छन्दः गणपतिर्देवता इष्टार्थे विनियोगः । दीर्घभाजा बीजेनाङ्गक्रिया मता । ॐ गां हृदयाय नमः । गीं शिरसे स्वाहा इत्यादि । ध्यानम् ॥ रक्तो रक्ताङ्गरागांशुककुसुमयुतस्तुन्दिलश्चन्द्रमौलिर्नेत्रैर्युक्तस्त्रिभिर्वामनकरचरणो बीजपूरात्तनासः । हस्ताग्राकृष्ट(क्लृप्त)पाशाङ्कुशरदवरदो नागवक्त्रोऽहिभूषो देवः पद्मासनो नो भवतु नतसुरो भूतये विघ्न-

राजः ॥ एवं ध्यात्वा यजेद्देवं मानसैः कुसुमैः शुभैः । हृत्पद्मे सर्वसिद्ध्यर्थं पश्चाद्बाह्ये प्रपूजयेत् ॥१॥ मानसैः कुसुमैरर्चा सात्विकी सा शुभा मता । अनिर्माल्या परा शुद्धा मोक्षदा सिद्धिदा शुभा ॥ २ ॥ तस्मात्सर्वप्रयत्नेन मानसं यजनं ध्रुवम् । आदावेव प्रकर्तव्यं पश्चाद्द्रव्यैस्तु विस्तरैः ॥३॥ एवं ध्यात्वा दीक्षितः प्रजपेल्लक्षचतुष्कं तद्दशांशं जुहुयाद्वक्ष्यमाणद्रव्यैः । मोदकपृथुकलाजासक्तिवक्षुनारिकेलतिलकदलीफलानि द्रव्याणि । साधारणधर्मादियुक्ते पीठे । कथम् । आग्नेयादिकोणेषु धर्मज्ञानवैराग्यैश्वर्याद्यस्त्रतुर्थीनमोन्ताः पूज्याः । ततः पूर्वादिदिक्षु अधर्माऽज्ञानाऽवैराग्याऽनैश्वर्याद्यस्तथैव पूज्याः । अनन्तरं मध्ये पद्मस्य कर्णिकायां आधारशक्तिकूर्मानन्तवराहपृथिवीकन्दमूलनालपत्रकेसरकर्णिका—सूर्यसोमवह्निमण्डलसत्वरजस्तमोगुणात्मात्मान्तरात्मपरमात्मविज्ञानात्मादीन्स्वस्वबीजाढ्यान्यजेत् । ततस्तीव्राज्वालिनीनन्दाभोगदाकामरूपिण्युग्रातेजोवतीसत्याविघ्नविनाशिनीति नव शक्तयः पूर्वादिक्रमेणाष्टसु दिक्षु यथाक्रमं सम्पूज्याः । पश्चात्सर्वशक्तिकमलासनाय नमः इति पीठं संपूज्य तन्मध्ये मूलमन्त्रेण देवतामावाह्य पूर्वादिचतुर्दिक्षु गणाधिपं गणेशानं गणनायकं गणक्रीडं प्रणवपूर्वकस्वस्वनामभिश्चतुर्थीनमोन्तैर्यजेत् । केसरेष्वङ्गदेवताः पूर्वादिपत्रमध्येषु वक्रतुण्डं एकदन्तं महोदरं गजाननं लम्बोदरं विकटं विघ्नराजं धूम्रवर्णं यजेत् । पूर्ववत्पत्राग्रेषु ब्राह्मीमाहेश्वरीकौमारीवैष्णवीवाराहीन्द्राणीचामुण्डामहालक्ष्म्याद्या मातरः । तत इन्द्राद्या लोकपालाः पूज्याः । तत उक्तध्यानपूर्वकं उक्तसंख्याकजपे कृते होमे च मन्त्रः सिद्धो भवति नान्यथेति । ततः प्रयोगानभीष्टान्कुर्वीतोक्तविधानतः । तर्पयेत्सलिलैः शुद्धैः प्रात्यर्देवं गणाधिपम् ॥ चतुश्चत्वारि-

शदधिकं चतुःशतमतन्द्रितः । प्राप्नुयान्मण्डलादर्वागमीष्टादधिकं नरः। नारिकेलैः कृतो होमश्चतुर्थ्यां श्रीप्रदो भवेत्। सतिलैस्तण्डुलैर्होमो लक्ष्मीवश्यप्रदो भवेत् ॥ लाजैस्त्रिमधुरोपेतैश्चतुःसहस्रहोमः कन्यां प्रयच्छेत् । अनेनैव विधानेन कन्या वरमवाप्नुयात् ॥ दध्ना विलोडितैर्लोणैर्होमो निशि चतुर्दिनम् । संवादं कुरुतेऽवश्यं तथान्यदपि मन्त्रिणः । इत्यादि संभवेत्सर्वं संमहादिह नोक्तम् ॥ इत्येकाक्षरगणपतिविधानम् ॥ ॥ अथ हेरम्बमनुविधानम् ॥ अथ हेरम्बमन्त्रं वक्ष्ये चतुरक्षरसंज्ञकम् । ॐ गूंनमः । ऋष्याद्याः प्रागीरिता एव । गांगींगूं इत्यादि प्रकारेण षडङ्गन्यासः ॥ ॥ अथ ध्यानम् ॥ मुक्ताकाञ्चननीलकुन्दघुसृणच्छायैस्त्रिनेत्रान्वितैर्नागास्यैर्हरियाहनं शशिधरं हेरम्बमर्कप्रभम् । दृप्तं दानमभीतिमोदकरदानञ्जं शिरोक्षात्मिकां मालां मुद्गरमङ्कुशं त्रिशिखकं दोर्भिर्दधानं भजे ॥ लक्षत्रयं जपेन्मन्त्रं दशांशं जुहुयात्ततः । पूर्वोक्ते पीठे पञ्चवक्त्रं दशभुजं हेरम्बमर्चयेत् । ॐ ह्रुं महासिंहासनाय हेरम्बाय नम इत्यनेनासनं दत्वा ॐ गं अनेनावाहयेत् पूजयेद्गन्धपुष्पाद्यैः पश्चादङ्गावरणं बाह्ये लोकपालान्यजेत् । वज्राण्येवमभ्यर्च्य यथाप्रकारं ध्यानपूर्वकमादरात् । ततस्तु सिद्धे मन्त्रेऽस्मिन्साधयेदिष्टमात्मनः । मोदकैर्जुहुयात्पञ्चम्यां चतुःसहस्रं चतुःशतं वा । अष्टम्यां कुमुदैः । चतुर्दश्यामपूपैर्जुहुयादिष्टसिद्धये । एभिरेव द्रव्यैः पर्वदिने होमः सर्वकामप्रदो भवेदयत्नतः ॥ इति हेरम्बमनुविधानम् ॥ ॥ अथ सुब्रह्मण्यमनुविधानम् ॥ अथ सुब्रह्मण्याख्यो मनुः कार्त्तिकेयस्याभिधीयते । ॐ वचद्भुवे नमः । वकारेण दीर्घभाजा अङ्गक्रिया ॥ ॥ अथध्यानम् ॥ सिन्दूरारुणमिन्दुकान्तिवदनं केयूरहारादिभिर्दिव्यैराभरणैर्वि-

१ लोणं लवणम् ।

२ मन्त्र॰

भूषिततनुं स्वर्गस्थसौख्यप्रदम् । अम्भोजाभयशक्तिकुक्कुटधरं रक्ताङ्गरागांशुकं सुब्रह्मण्यमुपास्महे प्रणमतां भीतिप्रणाशोद्यतम् ॥ लक्षमेकं जपेन्मन्त्रं साज्यान्नहविषा ततः । दशांशं जुहुयादन्ते ब्राह्मणानपि भोजयेत् ॥ धर्मादिकल्पिते पीठे वह्निमण्डलपश्चिमे । पूजयेद्विधिना देवमुपचारैर्यथोदितैः ॥ केसरेष्वङ्गपूजा स्यात् । पत्रमध्येषु जयन्तं आग्निवेश्यं कृत्तिकापुत्रं भूतपतिं सेनान्यं गुहसंज्ञकं हेमशूलं विशाखाख्यं शक्तिवज्रधरं तथा । दिग्दलेषु पूर्वादिषु देवसेनापतिं विद्यां मेधां वज्रं । विदिग्दलेषु शक्तिकुक्कुटौ मयूरद्विपौ पत्राग्रेषु यजेत्सुधीः । तद्बाह्ये लोकेश्वराः तदस्त्राणि च पञ्चभ्यां संप्रीणयेदेवं स्वादुभिर्भक्ष्यभोज्यकैः । पूजयेद्देवताबुद्ध्या कुमारान्ब्रह्मचारिणः । पूजितस्तु स देवोऽपि संतानं विजयं वीर्यं राज्ञामायुःश्रियं यशः प्रदद्यात् साधकस्य सुब्रह्मण्यः सुरार्चितः ॥ इति सुब्रह्मण्यमनुविधानम् ॥ ॥ अथ क्षिप्रगणपतिविधानम् ॥ अथ क्षिप्रगणपतिं निरूपयामः ॥ ॐ गं क्षिप्रप्रसादनाय नमः ॥ गणको मुनिराख्यातो विराट्छन्द उदाहृतम् । तादृशो विघ्नराजोऽत्र देवतापि समीरिता ॥ दीर्घयुक्तेन बीजेन षडङ्गानि प्रकल्पयेत् ॥ ॥ अथ ध्यानम् ॥ पाशाङ्कुशौ कल्पलतां विषाणं दधत्स्वतुण्डाहितबीजपूरः । रक्तस्त्रिनेत्रस्तरुणेन्दुमौलिर्हारोज्वलो हस्तिमुखोऽवताद्वः ॥ लक्षं जपेज्जपस्यान्ते जुहुयादयुतं तिलैः ॥ मधुरत्रितयैर्द्रव्यैरथवाष्टभिरीरितैः ॥ एकाक्षरोदिते पीठे वक्ष्यमाणविधानतः । पूजयेद्गन्धपुष्पाद्यैर्धूपदीपैर्गजाननम् । अङ्गानि पूर्वमभ्यर्च्य विघ्नानष्टौ यजेत्ततः । विघ्नं विनायकं वीरं शूरं वरदमेव च । इभवक्त्रं चैकरदं लम्बोदरमनन्तरम् ॥ पत्राग्रेषु ब्राह्म्यादिमातृगणं पश्चाल्लोकपालान्, तदस्त्राणि च तत्परम् । एवं संपूज्य देवेशं साधयेत्स्वमनोरथान् ।

धाज्याद्यैर्जुहुयान्नित्यमभवान्वत्सराद्भवेत् ॥ पायसेन कृतो होमः समग्रां श्रियमावहेत् । आज्यहोमेन वशयेत्प्राणिनः सकलान्सुधीः ॥ नालिकेरफलं पक्वं लोष्टवर्चसमन्वितम् । जुहुयान्मण्डलाद्दं मन्त्री वाञ्छितं मण्डलाद्भवेत् ॥ जुहुयादष्टभिर्द्रव्यैर्मधुरत्रयसंयुतैः । वशयेत्पार्थिवान्सर्वांस्तत्पत्नीरपि निश्चयः ॥ दिनादिषु चतुश्चत्वारिंशद्वारं विघ्नराजस्य मस्तके शुभोदकैस्तर्पयेत् श्रीमसिद्धये ॥ पाशाङ्कुशौ कल्पलतां स्वदन्तं करैर्वहन्तं कनकाद्रिकान्तम् । सोपानपङ्क्त्या दिननाथबिम्बादायान्तमम्भोजगतं विचिन्त्य ॥ प्रागुक्तमत्रसंप्रोक्तमयोगान्मनुनामुना । तेनास्मिन्नयथा मोक्षान्कुर्यान्मन्त्री विधानवित् ॥ इति क्षिप्रगणपतिविधानम् ॥ ॥ अथ शक्तिगणपतिविधानम् ॥ इदानीं शक्तिगणपतिं यथावद्वक्ष्ये । ॐ ह्रीं गं ह्रीं वशमानयस्वाहा ॥ ऋष्याद्याः पूर्वोक्ताः । अङ्गक्लृप्तिः पादैर्भवेत् । एकेनादौ त्रिभिर्द्वाभ्यां समस्तेनास्त्रमीरितम् । अङ्गक्लृप्तिरियं मता ॥ ॥ ध्यानम् ॥ इक्षैविंभतमिन्दुराण्डवरदौ पाशाङ्कुशौ पुष्करस्पृष्टस्तनमदावराङ्गमनयाश्लिष्टं स्वजामरदृशा ॥ श्यामाङ्ग्या विधृताब्जया त्रिनयनं चन्द्रार्धचूडं जपारक्तं हस्तिमुखं स्मरामि सततं भोगातिलोलं भजे ॥ लक्षत्रयं जपेन्मन्त्रमिक्षुदण्डैर्दशांशतः । अपूपैराज्ययुक्तैर्वा जुहुयान्मन्त्रसिद्धये ॥ स्वगुरुं धनधान्याद्यैः प्रीणयेत्प्रीतमानसः । पूजा पूर्ववदादिष्टा ततः कार्याणि साधयेत् ॥ हुत्वा पूर्वैश्च 'मधुरत्रयाक्तैर्वशयेन्नृपान् । चतुर्थ्यां नालिकेरेण महतीं श्रियमश्नुते ॥ लवणैर्मधुसंयुक्तैर्वशयेद्वनिताजनम् ॥ इति शक्तिगणपतिविधानम् ॥ ॥ अथ द्वादशाक्षरगणपतिविधानम् ॥ अथ द्वादशाक्षरगणपतिविधानं वच्मि । ॐ ह्रीं गं ह्रीं महागणपतये स्वाहा । पूर्वोक्ता एव ऋष्याद्याः । षडङ्गविधिरुच्यते । पञ्चभिर्मन्त्रवर्णैः समस्तेन च तद्विदुः ॥ ॥ ध्यानम् ॥

मुक्तागौरं मदगजमुखं चन्द्रचूडं त्रिनेत्रं हस्तैः स्वीयैर्दधतमरविन्दाङ्कुशौ रत्नकुम्भम् । अङ्कस्थायाः सरसिजरुचेस्तद्भुजालम्बिपाणेर्देव्या योनौ विनिहितकरं रत्नमौलिं भजामः ॥ लक्षमेकं जपेन्मन्त्रमपूपैस्तद्दशांशतो जुहुयात् । पूर्वोक्तेपीठे यजेत् । हुत्वेक्षुखण्डैर्मतिमान्राज्यश्रियमवाप्नुयात् । नारिकेलफलैस्तद्वद्रम्भापक्वफलैस्ततः ॥ वशयत्यखिलाँल्लोकान्पृथुकैः शर्करान्वितैः । वशं नयति राजानं सक्तुभिर्ब्राह्मणान्शुभैः ॥ घृतहोमेन धनवान्जायते नात्र संशयः ॥ इति द्वादशाक्षरगणपतिविधानम् ॥ ॥ अथ षड्विंशत्यक्षरगणपतिविधानम् ॥ तत्र च ॐ ह्रीं विरिविरिगणपतिवरवरद सर्वलोकं मे वशमानयस्वाहा ॥ अस्य गणकऋषिः । गायत्रीछन्दः । विरिगणपतिर्देवता । मायाद्यैर्मन्त्रपादैरङ्गविधिः । चतुश्चतुः पञ्चपञ्च पुनरपि पञ्चद्वाभ्यां च विभक्तैः ॥ ॥ अथ ध्यानम् ॥ सिन्दूराभमिभाननं त्रिनयनं हस्तेषु पाशाङ्कुशौ बिभ्राणं मधुमत्कपालमनिशं सार्धेन्दुमौलिं भजे । पुष्ट्याश्लिष्टतनुं ध्वजाग्रकरया पद्मोल्लसद्धस्तया तद्योन्याहितपाणिमात्तवसुमत्पात्रोल्लसत्पुष्करम् ॥ चतुर्लक्षं जपेन्मन्त्रं मध्वाक्तैरष्टद्रव्यैर्हुनेत् । प्रागुदीरितैरुपचारैः पूजयेत्प्रागुक्तपीठे यथाविधि । मिथुनान्यत्तिरायास्यादामोदाद्यैर्दिगम्बरैः । अनन्तरमङ्गैर्मातृभिस्तदनन्तरम् । ततो लोकपालैस्तदस्त्रैश्च । इति सिद्धमनुर्मन्त्री प्रफुल्लैः कमलैः शुभैः । वशमायान्वि मनुजास्तण्डुलैस्तिलमिश्रितैः । हुत्वा श्रियमवाप्नोति । मधुरत्रितयैर्लोणैर्वशं नयति पार्थिवान् । भक्ष्यभोज्यादिकं हुत्वा स्वमीष्टाननुसाधयेत् ॥ इति विरिगणपतिविधानम् ॥ ॥ अथ महागणपतिविधानम् ॥ महागणपतिं वक्ष्ये सर्वकामार्थसिद्धये । प्रणवश्रीशक्तिस्मरभूविघ्नबीजानि ङेन्तं गणपतिं वदेत् ॥ वरान्ते वरदं पश्चात्सर्वजनं मे वश-

मानय ठद्वयम् । अष्टाविंशत्यक्षरोऽयं महागणपतेर्मनुः ॥ गणकोऽस्य महर्षिश्छन्दो गायत्री निचृदन्विता । महागणपतिः प्रोक्तो देवो भुवनवन्दितः ॥ षड्बीजस्वबीजेन दीर्घभाजाङ्गकल्पना । पूर्वमिक्षुरससिन्धुमध्यगं तं गजाननम् । नवरत्नमयद्वीपं कल्पवृक्षसमाकुलम् । तन्मध्ये पारिजातं च सर्वर्तुपरिसेवितम् । तस्याधस्तान्महापीठं तन्मध्ये मातृकाम्बुजम् । तत्कर्णिकायां षट्कोणाधृतत्रिकोणं तन्मध्ये देवं स्मरेत् ॥ ॥ ध्यानम् ॥ हस्तीन्द्राननमिन्दुचूडमरुणच्छायं त्रिनेत्रं रसादाश्लिष्टं प्रियया सपद्मकरया स्वाङ्कस्थया संततम् । बीजापूरगदाधनुस्त्रिशिखयुक् चक्राब्जपाशोत्पलव्रीह्यग्रस्वविषाणरत्नकलशान्हस्तैर्वहन्तं भजे ॥ गण्डपालीगलद्दानपूरलालसमानसान् । द्विरेफान्कर्णतालाभ्यां वारयन्तं मुहुर्मुहुः ॥ कराग्रधृतमाणिक्यकुम्भवक्त्रविनिःसृतैः । रत्नवर्षैः प्रीणयन्तं साधकान्मदविह्वलम् ॥ माणिक्यमुकुटोपेतं रत्नाभरणभूषितम् । ध्यायन्मन्त्रं जपेन्मन्त्री चतुर्लक्षं समाहितः ॥ चतुःसहस्रसंयुक्तं चत्वारिंशत्सहस्रकम् । दशांशं जुहुयाद्द्रव्यैरष्टाभिर्मोदकादिभिः ॥ तर्पयेद्दिनशो विघ्नं प्रागुक्तेनैव वर्त्मना ॥ पूर्वोक्ते पूजयेत्पीठे विधिना गणनायकम् । त्रिकोणबाह्ये पूर्वादिचतुर्दिक्षु समर्चयेत् ॥ अग्रस्थबिल्ववृक्षाधःश्रियं श्रीपतिमर्चयेत् । पद्मयुग्मधरापद्मा शङ्खचक्रधरो हरिः ॥ दक्षिणे वटवृक्षाधो गौरीं गौरीपतिं यजेत् । पाशाङ्कुशधरा गौरी टङ्कशूलधरो हरः ॥ पश्चिमे पिप्पलस्याधो रतिं रतिपतिं यजेत् ॥ रतिरुत्पलहस्ताढ्या कोदण्डास्त्रधरः स्मरः ॥ सौम्ये प्रियङ्गुवृक्षाधो महीं पोत्रिणमर्चयेत् । शुकव्रीह्यग्रहस्ता भूर्गदाचक्रधरः पतिः ॥ षट्कोणेषु च संपूज्या आमोदाद्याः प्रियान्विताः ॥ आमोदं सिद्धिसहितमग्रकोणे समर्चयेत् । समृद्ध्या युक्तमभ्यर्च्य प्रमोदं वह्निकोणके । सुमुखं कान्तिसंयुक्तमीशकोणे समर्चयेत् ॥

दुर्मुखं मदनावत्या यजेद्वरुणकोणके। विघ्नं मदद्रवायुक्तं कोणे नैशाचरे यजेत् ॥ वायव्ये विघ्नकर्तारं द्राविण्या सह संयजेत्। पाशाङ्कुशाभयाभीष्टधारिणोऽरुणविग्रहाः ॥ गण्डभित्तिगलद्दानपूरघौतमुखाम्बुजाः। विघ्नास्तत्प्रमदाः सर्वा मदाघूर्णितलोचनाः ॥ एकहस्तधृताम्भोजा इतरालिङ्गितप्रियाः। षट्कोणपार्श्वयोः पूज्यौ शङ्खपद्मनिधी क्रमात्। निजप्रियाभ्यां सहितौ सर्वाभरणभूषितौ। केसरेष्वङ्गपूजा स्याद्ब्राह्म्याद्याः पत्रमध्यगाः ॥ बहिर्लोकेश्वराः पूज्या वज्राद्दीनि ततः परम् ॥ इत्थं जपादिभिः सिद्धे प्रयोगान्स्वमनीषितान्। साधयेदष्टभिर्द्रव्यैरन्यैर्वा कल्पचोदितैः ॥ पद्महोमेन भूपालांस्तत्पत्नीरुत्पलैः शुभैः। होमेन कुमुदैर्विप्रांस्तथा पिप्पलसंभवैः। समिद्भिर्नरपतीनुदुम्बरसमुद्भवैः। प्लाक्षैर्वैश्यान्वशयेत्। वटोद्भवैः शूद्रान्। मधुना स्वर्णलाभः। गोदुग्धेन गोलाभः। आज्यहोमेन महती श्रियं लभेत्। दध्ना सर्वसमृद्धिः स्यादन्नैरन्नपतिर्भवेत्। कुसुम्भकुसुमैर्होमो वस्त्रलाभकरः परः ॥ अधुना तर्पणं वक्ष्ये सर्वकामफलप्रदम्। श्रीशक्तिरतिभूलक्ष्मीः स्वबीजाद्याः प्रियान्विताः ॥ प्रत्येकमादौ मूलेन चतुर्वारं प्रतर्पयेत्। महागणपतिं विद्वान्भक्त्या संतर्पयेत्ततः ॥ आमोदादीन्स्वबीजाद्यान्शक्तियुक्तांश्च तर्पयेत्। चतुर्वारं पृथक्चान्ते शङ्खपद्मनिधी तथा ॥ नामादिबीजसहितौ तर्पयेत्स्वप्रियायुतौ ॥ आवरणान्तराणामपीत्यन्ये। अन्तरा महागणपतिं स्वबीजेन मूलेन वा चतुर्वारं तर्पयेत्। इति रहस्यम् ॥ सपर्या सम्यगुक्तात्र महागणपतेः शुभा। सर्वकामफलप्राप्तिहेतुभूता महीयसी ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीरामभारतीश्रीचरणपूज्यपादशिष्यत्रिविक्रमभट्टारकस्य कृतौ मन्त्ररत्नमञ्जूषायां
द्वितीयः सपर्यापटलः ॥ २ ॥

---

## अथ सोमसूर्याग्निमन्त्रस्तृतीयः पटलः ॥ ३ ॥

अथेदानीं चन्द्रमसो मनुरत्राभिधीयते ॥ ॐ सों सोमाय नमः ॥ इति षडक्षरो मन्त्रः । ऋषिरुक्तो भृगुश्छन्दः पङ्क्तिः सोमोऽस्य देवता ॥ सांसीमित्यादिप्रकारेण षडङ्गक्लृप्तिः ॥ ॥ अथ ध्यानम् ॥ कर्पूरस्फटिकावदातमनिशं पूर्णेन्दुबिम्बाननं मुक्तादामविभूषितेन वपुषा निर्मूलयन्तं तमः । हस्ताभ्यां कुमुदं वरं विदधतं नीलालकोद्भासितं स्वस्याङ्कस्थमृगोदिताश्रयगुणं सोमं सुधाब्धिं भजे ॥ दशलक्षं जपेन्मन्त्रं पायसेन ससर्पिषा । तावत्सहस्रं जुहुयात्समिद्धे हव्यवाहने ॥ धर्मादिपीठे सोमान्ते देवं सोमं यजेद्बुधः । अङ्गानि केसरेषु स्युः पत्रमध्येषु रोहिणी ॥ कृत्तिकारेवतीभरणीरात्रिरार्द्राज्योत्स्नाकलाः शुभाः । सितमाल्याम्बरधरा मुक्ताहारविभूषणाः । पयोधरभराक्रान्ता रचिताञ्जलयः शुभाः ॥ वल्लभासक्तमनसो मदविभ्रमसन्थराः । समभ्यर्च्या इत्यर्थः । पत्राग्रेषु आदित्यमङ्गलबुधवाक्पतिशुक्रमन्दराहुकेतवः पूज्याः । स्वस्ववर्णाम्बरोपेताः स्वाहाद्याक्षरबीजकाः । रक्तारुणश्वेतपीतनीलधूम्रसितासिताः । लोकपालास्ततः पूज्या वज्राद्याश्च ततः परम् । एवं सिद्धे मन्त्रे मन्त्री संपदां वसतिर्भवेत् । हृन्मध्ये चक्ररूपिणं देवं स्मरन् त्रिसहस्रं जपेत् । सर्वैश्वर्यं दरिद्रोऽपि प्राप्नुयाद्वत्सरान्तरे । पूर्वोक्तसंख्यं प्रजपेच्छिखमूर्ध्नि विचिन्तयेत् ॥ रोगापमृत्युदुःखानि जित्वा वर्षशतं वसेत् । ब्रह्मचर्ययुतः शुद्धश्चतुर्लक्षमिमं जपेत् ॥ निधानं भूगतं सद्यः प्राप्नुयाद्यत्नवर्जितम् । जितेन्द्रियो जपेन्मन्त्रं पौर्णमास्यां विशेषतः । भवेत्सौभाग्यनिलयः संपदामपरो निधिः ॥ घोराज्वरापस्मारशिरोरोगानामिचारानुपद्रवान् । विषाणामपि संघातं नाशयेन्मनुनाऽमुना ॥ पौर्णमास्यां

निराहारो दद्यादर्घ्यं विधूदये । प्राक्प्रत्यगायतं कुर्याद्भूतले मण्डलत्रयम् ॥ निषण्णः पश्चिमे मन्त्री मण्डले विहितासने । मध्यस्थे स्थापयेत्पश्चादपूताद्रव्याण्यशेषतः ॥ अन्यस्मिन्मण्डले सोममर्चयित्वाम्बुजान्विते । राजतं चषकं तत्र स्थापयेत्पुरतः सुधीः ॥ गोदुग्धेन समापूर्य स्पृष्ट्वा तं प्रजपेन्मनुम् । अष्टोत्तरशतं पश्चाद्विद्यामन्त्रेण देशिकः ॥ दद्यादर्घ्यं शशाङ्काय सर्वकामार्थसिद्धये ॥ अनेन विधिना कुर्यात्प्रतिमासमतन्द्रितः । षण्मासाभ्यन्तरे सिद्धिं साधकेन्द्रः समश्नुते ॥ श्रियमप्यूर्जितान्पुत्रान्सौभाग्यं पुष्कलं यशः । कन्यामिष्टामवाप्नोति कन्यापि वरमाप्नुयात् ॥ बहुना किमिहोक्तेन सर्वं दद्यान्निशाकरः । ॐ विद्ये विद्यामालिनि चन्द्रिणि चारुमुखि स्वाहा ॥ इति विद्यामन्त्रः ॥ इति सोमपूजा यथावदभिहिता ॥ ॥ अथ घृणिमन्त्र-(सूर्यमन्त्र)विधानम् ॥ अथ सौरान्प्रवक्ष्यामि सर्वरोगनिवारकान् । सर्वकामार्थदान्पुण्यान्प्रयोगसहिताञ्छुभान् ॥ तारं घृणिर्भृगुः पश्चाद्वामकर्णविभूषितः । वह्न्यासनो मरुच्छेपः सनेत्रोऽन्त्रिस्त्वपश्चिमः । इत्यसावष्टाक्षरो मनुः । ॐ घृणिः सूर्य आदित्यो देवः भार्गवऋषिश्छन्दो गायत्रं देवता मनोः । आदित्यो मुनिभिः प्रोक्तो दृष्टादृष्टफलप्रदः । अङ्गमन्त्राः प्रदर्श्यन्ते सत्याय हृदयं पुनः । ब्रह्मणे तु शिरः स्यात्तं विष्णवे च शिखा मता ॥ रुद्राय वर्म निर्दिष्टमग्नये नेत्रमीरितम् । शर्वायास्त्रमुदाहृतम् । तेजोज्वालामणि हुंफट् द्विठान्ताः पृथगीरिताः । ततः पञ्चमूर्तीन्न्यसेत् । आदित्यं विन्यसेन्मूर्ध्नि रविं मुखगतं न्यसेत् । हृदये भानुनामानं भास्करं गुह्यदेशतः ॥ सूर्यं चरणयोर्न्यसेद्भूस्वैः सद्यादिपञ्चभिः । प्रधानमूर्तिप्रतिमाः सर्वाभरणभूषिताः । मूर्धास्यकण्ठहृदयकुक्षिनाभिध्वजाङ्घ्रिषु । मन्त्रवर्णान्न्यसेदष्टौ

प्रत्येकं प्रणवादिकान् । एवं न्यस्तशरीरोऽसौ चिन्तयेत्तेजसांनिधिम् ॥ ॥ ध्यानम् ॥ रक्ताब्जयुग्माभयदानहस्तं केयूरहाराङ्गदकुण्डलाढ्यम् । माणिक्यमौलिं दिननाथमीडे बन्धूककान्तिं विलसत्त्रिनेत्रम् ॥ वसुलक्षं जपेन्मन्त्रं समिद्भिः क्षीरशाखिनाम् । तत्सहस्रं प्रजुहुयात्क्षीराक्ताभिर्जितेन्द्रियः ॥ पीठस्य कूर्मेः प्राक् चतुर्दिक्षु मध्ये च पूजयेत् । प्रभूतं विमलं सारं समाराध्यमनन्तरम् । पद्मासनं सुखं पश्चाद्विन्याधोन्तं प्रकल्पयेत् । दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला मता । अमोघा विद्युता चैव मध्ये सर्वतोमुखी पीठशक्तयः । दीप्तदीपशिखाकारा ह्रस्वत्रितयक्लीवरहितदीर्घस्वरव्यञ्जनरेफबीजकाः पूज्याः । ब्रह्मविष्णुशिवात्मकाय सौराय योगपीठासनाय नम इत्यनेनासनं दत्वा तन्मध्ये देवमावाह्य यजेत् । अङ्गानि केसरेषु स्वाद्विक्पत्रेष्वर्कमूर्तयः । आदित्याद्याः शक्तयश्च संप्रोक्ताः कोणपत्रगाः ॥ स्वस्वनामाद्याक्षराढ्यानि बीजानि । उषाप्रज्ञाप्रभासंध्येति शक्तयः । पत्रमूलेषु माहयाद्याः पुरतोऽरुणमर्चयेत् । चन्द्रादीन्पूजयेत्पश्चाद्ग्रहानष्टौ ततो बहिः । इन्द्रादयस्तदस्त्राणि यथापूर्वं समर्चयेत् ॥ एवं संपूज्य विधिवद्भास्करं भक्तवत्सलम् । दद्यादर्घ्यं प्रतिदिनं वारे वा तस्य चोदिते ॥ प्रभाते मण्डलं कृत्वा पूर्ववत्पीठमर्चयेत् । पात्रं ताम्रमयं प्रस्थतोयग्राहि मनोहरम् । निधाय तत्र मनुना पूरयेत्तच्छुभोदकैः । कुङ्कुमं रोचनाराजिरक्तचन्दनत्रैणवान् । करवीरजपाशालिकुशश्यामाकतण्डुलान् । निक्षिप्य सलिले तस्मिन्नैक्यं संभाव्य भानुना । साङ्गमभ्यर्चयेत्तस्मिन्भास्करं प्रोक्तलक्षणम् । गन्धपुष्पादिनैवेद्यैर्यथाविधि विधानवित् । तद्विधाय जपेन्मन्त्रं सम्यगष्टोत्तरं शतम् । पुनः संपूज्य गन्धाद्यैर्जानुभ्यामवनिं गतः । आमस्तकं समुद्धृत्य व्योम्नि सावरणे रवौ । दृष्टिं निधाय तैक्ष्येन मूलमन्त्रं

धिया जपन्। दद्यादर्घ्यं दिनेशाय प्रसन्नेनान्तरात्मना। दत्त्वा पुष्पाञ्जलिं भूयो जपेदष्टोत्तरं शतम्। यावदर्घ्यामृतं भानुः समादत्ते निजैः करैः। तेन तृप्तो दिनपतिर्दद्यादस्मै मनोरथान्। अर्घ्यदानमिदं पुण्यमायुरारोग्यवर्धनम्। सर्वकामप्रदं नृणां विद्याविभवभाग्यदम्॥ इति घृणिमन्त्रविधानम्॥ ॥ अथ चतुरक्षरसूर्यमन्त्रविधानम्॥ प्रणवो भुवनाधीशा हंस इत्यादिको मनुः। विसर्गान्तस्तथा प्रोक्तः कामधुक् चतुरक्षरः॥ ॐ ह्रीं हंसः। अस्याजऋषिः। गायत्रीछन्दः। सूर्यरूपिणी भुवनाधीशा देवता। तदङ्गविधिरुच्यते। दीर्घभाजा भुवनेश्वरीबीजेन तदङ्गपरिकल्पना॥ ॥ ध्यानम्॥ भास्वद्रत्नौघमौलिं स्फुरदमृतरुचो रञ्जयचारुरेखां सद्यःसंतप्तकार्तस्वरकमलजपाभासुराभिः प्रभाभिः। विश्वाकाशावकाशं ज्वलदतिरुचिरं धर्तृ पाशाङ्कुशेष्टाभीतीनां भङ्गितुङ्गस्तनमवतु जगन्मातुरार्कं वपुर्नः॥ चतुर्लक्षं जपेन्मन्त्रं दशांशं कमलैर्हुनेत्। पूर्वोक्ते पूजयेत्पीठे प्रागुक्तेनैव वर्त्मना। अर्घ्यदानं तथैवास्य दद्यात्सर्वसमृद्धये। पुत्रपौत्रप्रदं नृणां भजतां कल्पभूरुहम्॥ इति चतुरक्षरसूर्यमन्त्रविधानम्॥ ॥ अथ त्र्यक्षरसूर्यमन्त्रविधानम्॥ अथ प्रयोजनतिलकः॥ आकाशमग्निर्दीर्घेन्दुसयुतो भुवनेश्वरी। सर्गान्वितो भृगुर्भानोस्त्र्यक्षरो मनुरीरितः॥ ह्रांह्रींसः॥ आधारादिपराप्रान्तं कण्ठादाधारकावधि। मूर्धादिकण्ठपर्यन्तं क्रमाद्बीजत्रयं न्यसेत्॥ दीर्घस्वरप्रयुक्तेन मध्येनाङ्गक्रिया मता॥ ॥ ध्यानम्॥ रक्ताम्बुजासनमशेषगुणैकसिन्धुं भानुं समस्तजगतामधिपं भजामि। पद्मद्वयाभयवरान्दधतं कराब्जैर्माणिक्यमौलिमरुणाङ्गरुचिं त्रिनेत्रम्॥ भानुलक्षं जपेन्मन्त्रं दशांशं जुहुयात्तिलैः। मधुरत्रयसंयुक्तैः सुशुद्धैर्विजितेन्द्रियः॥ पूर्वोक्ते पूजयेत्पीठे विधानेनामुना रविम्। प्रथमावृत्तिरङ्गैः स्यात्सरा चन्द्रादिभि-

मेद्वैः ॥ तृतीया लोकपालैः स्याच्चतुर्थी स्याच्चदायुधैः । इति संपूज्य निर्माल्यं तेजश्चण्डाय दीयते । अर्घ्यं आगीरितं दद्याद्धानवे संयतेन्द्रियः । सोऽपि रत्नं धनं धान्यं पुत्रपौत्रान्यशः पशून् । वस्त्राणि भूषणादीनि दद्यादस्मै न संशयः ॥ इति त्र्यक्षरसूर्यमन्त्रविधानम् ॥ ॥ अथ मार्तण्डभैरवविधानम् ॥ आकाशमग्निपवनसलिलोर्वीश-सिन्दुमत् । इति भवति मार्तण्डभैरवं नाम बीजं ह्यूं ॥ एतद्बीजं विम्बपुटितं सर्वकामफलप्रदम् । ठ्रिं इति विम्बबीजम् । पञ्चह्रस्वाढ्य-बीजेन पञ्चभूताः प्रविन्यसेत् । अङ्गुष्ठादिकनिष्ठान्तमङ्गुलीषु क्रमा-दिमाः ॥ सूर्यश्च भास्करो भानुस्तथो रविदिवाकरौ । शिरोवदनहृद्गु-ह्यपाददेशेषु ताः पुनः ॥ मार्तण्डबीजेन नेत्रान्वाङ्गानि च प्रकल्प-येत् । व्यापकं बीजेन मूलेन कुर्वीत वदनन्तरम् ॥ ॥ ध्यानम् ॥ हेमाम्भोजप्रवालप्रतिमनिजरुचिं चारुखट्वाङ्गपद्मौ चक्रं शक्तिं च पाशं सृणिमतिरुचिरामक्षमालां कपालम् । हस्ताम्भोजैर्दधानं त्रिनयनविल-सद्वेदवक्त्राभिरामं मार्तण्डं वल्लभार्धं मणिमयमुकुटं हारदीप्तं भजामः ॥ लक्षत्रयं जपेन्मन्त्री बीजं विम्बपुटीकृतम् । दशांशं कमलैः फुल्लैर्जुहु-यान्मधुनोक्षितैः ॥ पीठे दीप्तादिभिर्युक्ते कर्णिकायामुपाविकाः । पूर्वा-विदिक्षु संपूज्य भूवि मूलेन कल्पयेत् ॥ आवाह्य पूजयेद्देवं वक्ष्यमा-णविधानतः । सूर्याद्यांश्चतुरो दिक्षु विदिक्ष्वन्यान्समर्चयेत् ॥ अङ्गपूजा यथापूर्वं नेत्रमीशानदिग्दले । ग्रहानष्टौ ततो बाह्ये लोकपालानतः परम् ॥ अर्पयेवान्प्रजपेन्मन्त्री सदा मार्तण्डभैरवम् । इति सिद्धमनु-र्मन्त्री साधयेदिष्टमात्मनः ॥ शाल्यान्यतिलबिल्वानां लक्षहोमाद्भवे-न्निधिः । राजवृक्षसमुद्भूतैः पुष्पैर्होमोऽरिमारकः ॥ जपाकुसुमहोमेन वशयेदचिरान्नृपान् । मातुलुङ्गफलैर्हुत्वा धनमिष्टं लभेत सः । इमं

मन्त्रं जपेन्मर्त्यः कान्तिं पुत्रान्बलं द्युतिम् । वाक्सिद्धिममितां लक्ष्मीं सौभाग्यमपि साधयेत् ॥ इति मार्तण्डभैरवमनुविधानम् ॥ ॥ अथ द्व्यक्षराजपामनुविधानम् ॥ वियदर्धेन्दुलसितं वदादिः सर्गसंयुतः । अजपाख्यो मनुः प्रोक्तो द्व्यक्षरः सुरपादपः ॥ हंसः ॥ ऋषिर्ब्रह्मा स्मृतो देवी गायत्रीछन्द ईरितम् । देवता जगतामाद्यः प्रोक्तो हि गिरिजापतिः ॥ ह्रसा तु दीर्घयुक्तेन कुर्यादङ्गक्रियां मनोः ॥ ध्यानम् ॥ उद्यद्भानुस्फुरिततडिदाकारमर्धाम्बिकेशं पाशाभीती वरदपरशू संदधानं कराब्जैः । दिव्याकल्पैर्नवमणिमयैः शोभितं विश्वमूलं सौम्याग्नेयं वपुरवतु वश्चन्द्रचूडं त्रिनेत्रम् ॥ भानुलक्षं जपेन्मन्त्री पायसेन ससर्पिषा । तद्दशांशं च जुहुयात्ततः सिद्धो भवेन्मनुः ॥ दीप्तादिपूजिते पीठे प्राक्प्रोक्तेन यजेच्छिवम् । मूर्तिमूलेन संकल्प्य यजेदङ्गादिभिः सह ॥ ऋतुवसू नरपरौ दिग्दलेषु विदिक्ष्वथ । अर्चयेदत्रजां गोजामब्जजामद्रिजां पुनः ॥ लोकेश्वरास्त्रदलाणि प्रयजेद्देवमन्वहम् । अर्घ्यं च विधिवद्दद्यात्प्राक्प्रोक्तेनैव वर्त्मना ॥ मन्त्राढ्यमातृकापद्मे पूर्णकुम्भं निधाय तम् । पिधाय वामहस्तेन न्यस्तमन्त्रेण संयुतम् ॥ अष्टोत्तरशतं मन्त्रं जपेत्तोयं सुधामयम् । स्मृत्वा तेनाऽभिषिञ्चेद्यं स भवेद्विगतामयः ॥ आयुरारोग्यविभवानमितांल्लभते नरः । अनेनैव विधानेन विषार्तो निर्विषो भवेत् ॥ इन्दुभ्यां विगलत्सुधापरिचितं मन्त्रान्त्यबीजं ततः प्रद्योतत्परमामृतार्द्रशशिना ससिक्तमात्मं स्मरन् ॥ मन्त्री मन्त्रमिमं जपेद्विषगदोन्मादापमृत्युं जरां जित्वा वर्षशतं विशिष्टविभवो जीवेत्सुखं बन्धुभिः ॥ इति सौरा मन्त्राः सम्यङ्निरूपिताः ॥ ॥ अथाग्निमन्त्रविधानम् ॥ व्याहृतित्रयमग्निः स्याज्जातवेद इहावह । सर्वकर्माणि संभाष्य साधयाग्निप्रियां ततः ॥ तारा योऽयं मनुः

प्रोक्तः पञ्चविंशतिवर्णवान् ॥ ॐ भूर्भुवःस्वः अग्नये जातवेद इहावह सर्वकर्माणि साधय स्वाहा । ऋषिर्भृगुर्भवेच्छन्दो गायत्रं देवताऽनलः । विभक्तैः पञ्चभिः षड्भिश्चतुर्भिः पञ्चभिस्त्रिभिः ॥ द्वाभ्यामङ्गक्रिया प्रोक्ता वर्णमूलमनोः क्रमात् ॥ ॥ध्यानम्॥ अंसासक्तसुवर्णमाल्यमरुणस्रक्चन्दनालंकृतं ज्वालापुञ्जजटाकलापविलसन्मौलिं सुशुक्लांशुकम् । शक्तिस्वस्तिकदर्भमुष्टिकजपस्रक्स्रक्स्रुवाभीर्वरान्दोर्भिर्बिभ्रतमञ्चितत्रिनयनं रक्ताभमग्निं भजे ॥ गुरोर्लब्ध्वमनुर्मन्त्री चतुर्दशयामुपोषितः । जपेल्लक्षाणि शुद्धाचारो जितेन्द्रियः ॥ क्रमाद्दशसमिद्व्रीहितिलराजीहविर्घृतैः । सर्वानष्टोत्तरशतं जुहुयादिनशः सुधीः । दिनादि दश निर्वर्त्य दत्त्वा पूर्णाहुतिं ततः ॥ एकादशां द्विजोत्तमान्(?) । सपूज्य तर्पयेद्विप्रैर्यथाशक्त्या विपश्चितः । गुरवे अरुणां गां पयस्विनीं वासांसि धनधान्यानि दद्यात् । स्वमण्डलान्तं प्रयजेत्पीठं सनवशक्तिकम् । पीता श्वेतारुणा कृष्णा धूम्रा तीव्रा स्फुलिङ्गिनी । रुचिरा ज्वालिनी प्रोक्ता कृशानोर्नव शक्तयः ॥ स्वबीजेनासनं दत्त्वा मूर्तिमूलेन कल्पयेत् । तत्र सपूजयेद्वह्निं विधिना प्रोक्तलक्षणम् ॥ अङ्गपूजां पुरा कृत्वा मूर्तीरष्टौ दलेष्विमाः । जातवेदाः सप्तजिह्वो हव्यवाहनसंज्ञकः । अश्वोदरवैश्वानरकौमारतेजाख्या विश्वमुखदेवमुखौ ततः ॥ अर्चयेच्छक्तिस्वस्तिकहस्ताः सर्वे लोकपालाः ततसहस्राणि । इति संपूजयेन्नित्यं जपेत्साग्रं सहस्रकम् । जायते वत्सराद्वाग्मी धनधान्यसमृद्धिमान् ॥ साज्यमन्नं प्रजुहुयाद्वत्सराद्भजते श्रियम् । कुसुमैर्नेत्रवृक्षस्य दधिक्षौद्रघृतप्लुतैः । करवीरप्रसूनैर्वा मण्डलाख्यात्समृद्धिमान् ॥ षण्मासं कपिलाज्येन जुहुयाद्वत्सरान्तरे । तस्य संजायते लक्ष्मीः कीर्तिस्त्रैलोक्यवन्दिता ॥ शालिभिर्जुहुयान्नित्यं वि-

## अथ शैवमन्त्रविवरणश्चतुर्थः पटलः ॥ ४ ॥

अथ प्रासादमनुविधानम् ॥ अथ शैवान्प्रवक्ष्यामि मन्त्रान्सर्वार्थसाधकान् । ऋष्यादिसहितान्भूयः साङ्गान्सावरणान्स्फुटम् ॥ सान्तः सद्यान्तसंयुक्तो विन्दुभूषितमस्तकः । प्रासादाख्यो मनुः प्रोक्तो भजता कल्पभूरुहः ॥ ॐ ह्रौं ॥ अस्य वामदेव ऋषिः । पङ्क्तिश्छन्दः । सदाशिवो देवता । दीर्घभाजा मूलबीजेन षडङ्गविधिः ॥ ईशानादिपञ्चमूर्तीरङ्गुष्ठादिषु न्यसेत् । यथा । ॐ ह्रौं ईशानाय नमः । ह्रैं तत्पुरुषाय० । ह्रूं अघोराय० । ह्रीं वामदेवाय० । ह्रां सद्योजाताय० । प्रणवादिनमोन्ताः । तत्तदङ्गुलिभिस्तत्र्यीजादिकं न्यसेद्भूयः शिरोवदनहृद्गुह्यपादस्थेषु क्रमात्ता एव मूर्तीः । पुनरूर्ध्वप्राग्दक्षिणोदीच्यपश्चिमेषु मुखेषु ताः । इति विन्यस्य चिन्तयेद्देवम ॥

॥ अथ ध्यानम् ॥ मुक्तापीतपयोदमौक्तिकजपावर्णैर्मुखैः पञ्चभिस्त्र्यक्षैरञ्चितमीशमिन्दुमुकुटं पूर्णेन्दुकोटिप्रभम् । शूलं टङ्ककृपाणवज्रदहनं नागेन्द्रघण्टाङ्कुशान्पाशं भीतिहरं दधानममिताकल्पोज्ज्वलं चिन्तयेत् ॥ एवं ध्यात्वा जपेन्मन्त्रं पञ्चलक्षं मधुप्लुतैः । प्रसूनैः करवीरोत्थैर्जुहुयात्तद्दशांशकम् ॥ ततो वामादिशक्तियुते पीठे देवमायाद्य पूजयेत् । वामाज्येष्ठारौद्रीकालीकलविकरणीबलविकिरणीबलप्रमथनीसर्वभूतदमनीमनोन्मनीतिसंप्रोक्ताः पीठशक्तयः । तत्पीठं पीठमन्त्रेण यजेत् । नमोभगवते सकलगुणशक्तियुक्तायानन्ताय योगपीठात्मने नमः । तारादिको मनुः । तस्मिन्पीठे देवमावाह्याभ्यर्च्य प्रथमं कर्णिकायामैशान्यामीशं स्फटिकसंनिभं यजेत् । पूर्वादिचतुर्दिक्षु तत्पुरुषादिकाः पीताञ्जनरक्तश्वेताः प्रधानसदृशाः पूर्वदक्षिणोत्तरपश्चिमेषु यजेन्मूर्तीः । कोणेषु निवृत्तिप्रतिष्ठाविद्याशान्त्याख्या-

ततो यजेच्छक्तीर्विंद्युदाभाः । केसरेषु अङ्गानि पत्रेषु विद्येश्वरान् अनन्तं सूक्ष्मं शिवोत्तमं एकनेत्रं एकरुद्रं त्रिमूर्तिं श्रीकण्ठं शिखण्डिनं । रक्तपीतासितारक्तकृष्णारक्ताञ्जनसितान् शूलवज्राक्षचापहस्तानुत्तरादि यजेत् । उमां चण्डेश्वरं नन्दिनं महाकालं गणेशं वृषभं भृङ्गिरिटिं स्कन्दम् । सुवर्णतोयारुणश्यामसुचेन्दुसितपाटलाभान् पत्राग्रेषु । बाह्ये इन्द्रादयः पूज्या अस्त्रसहिताः ॥ इति संपूज्य देवेशं भक्त्या परमया युतः । प्रीणयेद्गन्धपुष्पाद्यैर्धूपदीपादिभिस्तथा । पुत्रमित्रादिसहितां श्रियं प्राप्य प्रमोदते ॥ इति प्रासादमनुविधानम् ॥ ॥ अर्धनारीश्वरमनुविधानम् ॥ अग्निसंवर्तकादित्याऽर्येनिलोपेर्चे विन्दुमान् ॥ ह्रेंक्रौं ॥ चिन्तामणिरिति ख्यातो भजतां सुरपादपः ॥ अस्य काश्यपऋषिः । अनुष्टुप्छन्दः । अर्धनारीश्वरो देवता । रेफादिव्यस्त्रनैः षड्भिः षडङ्गानि ॥ ॥ ध्यानम् ॥ नीलप्रवालरुचिरं विलसत्त्रिनेत्रं पाशारुणोत्पलकपालकशूलहस्तम् । अर्धाम्बिकेशमनिशं प्रविभक्तभूषं बालेन्दुबद्धमुकुटं प्रणमामि रूपम् ॥ लक्षमेकं जपेन्मन्त्रं न्यासध्यानपुरःसरम् । अयुतं मधुरासिक्तैर्जुहुयात्तिलतण्डुलैः ॥ प्रागीरिते यजेत्पीठे ह्यङ्गैः प्रागीरितैस्ततः । वृषाद्यैर्मातृभिः पश्चाल्लोकपालैस्तदायुधैः ॥ एवमभ्यर्चिते देवे सर्वमङ्गलकारके । तेजःकान्तियशोलक्ष्मीवाचां भवति वल्लभः ॥ स्वरामृतमिदं बीजं विगलत्सुसुधामृतम् । चन्द्रबिम्बयुतं मूर्ध्नि ध्यातं क्ष्वेडगदापहम् ॥ प्रतिलोमस्वरावीतं बीजं वह्निगृहे स्थितम् । रेफादिव्यस्त्रनोह्लासिषट्कोणाभिवृतं बहिः ॥ भूतार्तस्यामृतं मूर्ध्नि भूतमाशु विनाशयेत् । बीजचन्द्रगतं बीजं........ । सर्वैर्गलत्सुधापूरं नेत्रे ध्यातं रुजं हरेत् ॥ एवमेव स्मृतं बीजं कुक्षिशूलादिरोगनुत् । कुङ्कुमाभमिदं

बीजं त्रिकोणाकृति भास्वरम् । स्मरेद्युतं यस्य मूर्ध्नि स वश्यो जायतेऽचिरात् । किंबहुना । यद्यदिच्छति यो मन्त्री तत्तद्भूयान्न संशयः ॥ क्षकारोमाग्निपवनवामकर्णार्धचन्द्रवान् । उक्तं तुम्बरबीजं तत्सर्वकामफलप्रदम् ॥ क्स्र्यूं ॥ पूर्वोक्ता एव मन्त्राद्याः ॥ षड्दीर्घभाजा बीजेनाङ्गानि ॥ अथवा बिन्दुसहितैर्मन्त्रावयवाक्षरैः समस्तेन चाङ्गानि । चतस्रो देव्यो जयाविजयाऽजिताऽपराजिताः । आसां बीजानि क्स्र्यूं स्र्यूं र्म्यूं ब्र्यूं । एवत्पूर्वमर्चयेत्पूजयेद्वा न्यसेद्वा । देवं देवीं च कनिष्ठाद्यङ्गुलीषु यथाक्रमं न्यसेत् । पादान्मूर्धानधि न्यसेन्मुष्टिनावयवेषु तम् । तलाभ्यां व्यापकं कुर्यान्मूर्धादि चरणावधि ॥ षडङ्गानि ततो न्यस्येत्क्रमेण हृदयादिषु । देवं देवीं यथापूर्व मूर्धास्यहृदयनाभिगुह्येषु यथाक्रमं विन्यस्य देवं विचिन्तयेत् ॥ ध्यानम् ॥ रक्ताभमिन्दुशकलाभरणं त्रिनेत्रं खट्वाङ्गपाशसृणिशुभ्रकपालहस्तम् । वेदाननं चिपिटनासमतर्क्यभूयं रक्ताङ्गरागकुसुमांशुकमीशमीडे ॥ लक्षमानं जपेन्मन्त्रं जुहुयात्सर्पिषाऽयुतम् । वक्ष्यमाणे यजेत्पीठे देवमावरणैः सह ॥ नपुंसकस्वरैर्विद्वाननुलोमविलोमगैः ॥ धर्मादिकानधर्मांश्च पदा गात्राणि विन्यसेत् । इकारेण न्यसेत्पश्चात्तत्स्वरूपान्गुणानथ । ईकारेण वकारेण मायाविद्यामये क्रमात् ॥ अधऊर्ध्वच्छदे न्यसेदूकारेण ततोऽम्बुजम् । संध्याक्षरैर्यजेन्मन्त्री शक्तीर्वामादिकाः क्रमात् ॥ वामां ज्येष्ठां तथा रौद्रीमिच्छां ज्वालास्वरूपिणीम् । एवं प्रकल्पिते पीठे देवमावाह्य पूजयेत् ॥ अङ्गावृतेर्बहिर्देवीर्दिक्पत्रेषु समर्चयेत् । यथावत्स्वस्वबीजेन सर्वा रक्तानुलेपनाः । अरुणांशुकपुष्पाढ्यास्ताम्बूलापूरिताननाः ॥ वल्लकीवादनपरा मदमन्मथपीडिताः । ईशादिकोणे-

प्वभ्यर्चेद्दूतीर्बीजादिकाः क्रमात् ॥ दुर्भगां सुभगां कान्तां करालां मोहिनीमिमाः । बद्धाञ्जलिपुटाः किंचिदानम्रवदनाम्बुजाः ॥ देवीस-दृशभूषाढ्या दूतीर्मन्त्रान्विदुः क्रमात् । चतुरः शादिकान्वर्णानन्त-स्थान्बिन्दुसंयुतान् । बाह्ये सर्वाँल्लोकपालवदस्त्रादीन्यजेत्क्रमात् ॥ एवं यो भजते भक्त्या देवमुक्तेन वर्त्मना । न तस्य दुर्लभं किंचि-त्रिषु लोकेषु विद्यते ॥ वायुवह्निपुरान्तःस्थं बीजं स्मृत्वा जपे-त्सुधीः । ज्वरभूतमहारोगा नश्यन्त्येतेन तत्क्षणात् ॥ स वश्यो जायते शीघ्रं मन्त्रस्यास्य प्रभावतः ॥ हृद्रोगे कामलारोगे विषमे श्वासकासयोः । एतज्जप्तं जलं प्रातः पिबेत्तद्रोगशान्तये ॥ लोहितोऽप्यासनः सद्यो बिन्दुमान्प्रथमं विदुः । द्वितीयं वह्निधी-जस्थं दीर्घा शान्तीन्दुभूषिता । तृतीयं लाङ्गली सर्गी मन्त्रो बीज-त्रयान्वितः ॥ प्रों श्रीं ठः ॥ अस्य नीलकण्ठमन्त्रस्य ब्रह्मा ऋषिः । गायत्रीछन्दः । नीलकण्ठो देवता । विषहरणार्थे विनियोगः । हरहरस्वाहा हृदयाय । कपर्दिनेस्वाहा शिरसे । नीलकण्ठायस्वाहा शिखायाम् । कालकूटविषभक्षणायहुंफट् कवचाय । नीलकण्ठाय स्वाहा अस्त्रायफट् । इति पञ्चाङ्गम् । मूर्ध्नि कण्ठे च हृदये क्रमा-द्बीजत्रयं न्यसेत् । ततो देवं विचिन्तयेत् ॥ ध्यानम् ॥ बालार्को-द्युततेजसं धृतजटाजूटेन्दुखण्डोज्ज्वलं नागेन्द्रैः कृतभूषणं जपवटीं शूलं कपालं करैः । खट्वाङ्गं दधतं त्रिनेत्रविलसत्पञ्चाननं सुन्दरं व्याघ्रत्वक्परिधानमब्जनिलयं श्रीनीलकण्ठं भजे ॥ लक्षत्रयं जपे-न्मन्त्रं तद्दशांशं ससर्पिषा । हविषा जुहुयान्मृत्युंजयं देवं विधानतः ॥ एवं पूजादिभिः सिद्धे मनौ मन्त्री विषद्वयम् । नाशयेदचिराद्देव नीलकण्ठ इवापरः ॥ मनुनानेन संजप्तैः कुम्भस्थैः सलिलैः शुभैः ।

अभिषिञ्चेद्विषाक्रान्तं विषान्मुच्येत स ध्रुवम् ॥ स्पृष्ट्वा जपेद्विषमस्तं तत्क्षणान्निर्विषो भवेत् । बीजाभ्यां प्रथमान्त्याभ्यां पार्श्वयोर्विषमाहरेत् । मध्येन मध्यगं सर्वं मनुनानेन संहरेत् ॥ बहुना किमिहोक्तेन मन्त्रेणानेन मन्त्रितम् । कालकूटं विषं साक्षाद्भवेत् स्यात्परमामृतम् ॥ इति नीलकण्ठमन्त्रविधिः ॥ ॥ अथ चण्डेश्वरमन्त्रविधानम् ॥ उर्वीशो वह्निशिखरो लान्तस्थो दान्त ईरितः । फडन्तश्चण्डमन्त्रोऽयं त्रिवर्णात्मा समीरितः ॥ ॐ ध्येफट् ॥ अस्य त्रितो मुनिः । अनुष्टुप्छन्दः । चण्डेशो देवता । दीप्तफट् हृदयम् । ज्वालफट् शिरः । ज्वालिनिफट् शिखा । वटफट् कवचम् । हनफट् नेत्रम् । सर्वज्वालिनिफट् अस्त्रम् ॥ ध्यानम् ॥ चण्डेश्वरं रक्ततनुं त्रिनेत्रं रक्तांशुकाढ्यं हृदि भावयामि । टङ्कं त्रिशूलं स्फटिकाक्षमालां कमण्डलुं बिभ्रतमिन्दुचूडम् ॥ वर्णलक्षं जपेन्मन्त्रं होमं चैतद्दशांशतः । मधुरत्रयसंयुक्तैस्तण्डुलैर्जुहुयाच्छुभैः । पञ्चाक्षरोदिते पीठे वामादिशक्तियुक्ते देवमभ्यर्चयेत् । चं चण्डेशायनमः । अनेन पूजयेद्देवं भक्तिप्रह्वो यथाविधि । अङ्गैर्मातृभिराशेशैस्तदस्त्रैश्च यथाविधि ॥ चतुरावरणैः.... । इति संपूजिते देवे धनवाञ्जायतेऽचिरात् । अर्पयेन्मधुनानेन नित्यमष्टोत्तरं शतम् । श्रियमाप्नोति महतीं पुत्रमित्रसमन्विताम् ॥ प्रियङ्गुकुसुमैः कुङ्कुमैस्तत्काष्ठज्वलितेऽनले । जुहुयाद्युतं मन्त्री पुरक्षोभो न जायते ॥ साध्यवृक्षत्वचो लोणं पिष्ट्वा पिष्टसमन्वितम् । पुत्तलीं रुचिरां कृत्वा हुनेदष्टोत्तरं निशि । सप्ताहमेवं कुर्वीत साध्यो दासो भवेत्स्वयम् ॥ शैवमन्त्रेषु निष्णातश्चण्डेश्वरमनुं जपेत् । सर्वान्कामानवाप्नोति परत्रेह च नन्दति । ॥ अथ मृत्युंजयमन्त्रविधानम् ॥ वारः स्थिरा सकर्णेन्दुर्भृगुः

सर्गसमन्वितः । त्र्यक्षरात्मा निगदितो मन्त्रो मृत्युंजयाभिधः ॥ ॐ जूं सः ॥ इति त्र्यक्षरात्मा मृत्युंजयमन्त्रः । अस्य कहोळ ऋषिः । देवीगायत्रीछन्दः । मृत्युंजयाख्यो महादेवो देवता । सांसीमित्यादिप्रकारेण षडङ्गविधिः ॥ । अथ ध्यानम् ॥ . चन्द्रार्काग्निविलोचनं स्मितमुखं पद्मद्वयान्तःस्थितं मुद्रापाशमृगाक्षसूत्रविलसत्पाणिं हिमांशुप्रभम् । कोटीरेन्दुगलत्सुधाप्लुततनुं . हारादिभूषोज्ज्वलं कान्त्या विश्वविमोहनं पशुपतिं मृत्युंजयं भावये ॥ लक्षत्रयं जपेन्मन्त्रं दशांशं जुहुयात्ततः । दुग्धाक्तैरमृतखण्डैराज्येनालोलितैस्तु वा ॥ शैवे पीठे संपूजयेदेवं अङ्गैराशापालैस्तदस्त्रैश्च । जपपूजादिभिः सिद्धे मन्त्री कुर्यान्मनीषितान् ॥ दुग्धसिक्तैः सुधाखण्डैर्मन्त्री मासं सहस्रकम् । जुहुयादिति शेषः । संतुष्टः शंकरस्तेन सुधाप्लावितविग्रहः ॥ आयुरारोग्यसंपत्तिं यशः पुत्रान्विवर्धयेत् । सुधावटी तिला दूर्वात्रयं सर्पिः पयो हविः । एतैश्च सप्तभिर्द्रव्यैर्जुहुयात्सप्तवासरम् ॥ क्रमाद्दशशतं नित्यमष्टोत्तरमतन्द्रितः । सप्ताधिकान्द्विजाभित्यं भोजयेन्मधुरान्वितम् । विकारानुगुणं मन्त्री वर्धयेद्धोमवासरान् ॥ होतृभ्यो दक्षिणां दद्यादरुणा गाः पयस्विनीः । गुरुं संप्रीणयेत्स्वर्णाद्यन्नधान्यगवादिभिः ॥ कृतेनानेन साध्यः स्यान्मन्त्रः सर्वार्थदः परम् । ज्वरादिरोगनिर्मुक्तः शतं जीवेत्सुखं पुनः ॥ आभिचारे ज्वरे दाहे उन्मादे च शिरोगदे । असाध्यरोगे क्ष्वेलार्ते होमोऽयं शान्तिदः सदा ॥ एकादशाहुतीर्नित्यं दूर्वाभिर्जुहुयान्नरः । तेनापमृत्युं जयति सुदृढः कीर्तिमान्भवेत् ॥ त्रिजन्मसु सुधावल्लीकाश्मरीवकुलोद्भवैः । समिद्वरैः कृतो होमोऽप्यपमृत्युगदापहः ॥ सिद्धार्थैर्विहितो होमो महाज्वरविनाशनः । अपामार्गसमिद्धोमः सर्वा-

मयनिषूदनः ॥ इति मृत्युंजयमन्त्रविधानम् ॥ ॥ अथ पञ्चाक्षरशिवमन्त्रविधानम् ॥ हृदयं वपरं साक्षिलान्तोऽनन्तान्वितो मरुत् । पञ्चाक्षरो मनुः प्रोक्तस्ताराद्योऽयं षडक्षरः ॥ ॐनमः शिवाय ॥ अस्य वामदेव ऋषिः । पङ्क्तिश्छन्दः । ईशो देवता । पद्मिवर्णैः षडङ्गानि । मन्त्रवर्णात्मिकाः पञ्च न्यसेन्मूर्तीर्यथाक्रमम् । तर्जनीमध्ययोरन्त्यानामिकाङ्गुष्ठयोः पुनः ॥ ताभ्यस्तत्पुरुषाघोरराद्यवमेशसंज्ञकाः । वक्त्रहृत्पादगुह्येषु निजमूर्धनि ताः पुनः ॥ प्राग्याम्यवारुणोदीच्यमध्यवक्त्रेषु पञ्चसु । मन्त्राङ्गानि न्यसेत्पद्मु क्रमान्मन्त्री विधानतः ॥ अथ ध्यानम् ॥ ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम् । पद्मासीनं समन्तात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम् ॥ तत्त्वलक्षं जपेन्मन्त्रं मन्त्री चैकाग्रमानसः । तावत्सहस्रं जुहुयात्पायसं हव्यवाहने ॥ ततः सिद्धो भवेन्मन्त्रो वामादिशक्तिभिर्युते । शैवे पीठे यजेद्देवं प्रासादोक्तविधानतः ॥ इत्थं संपूज्य देवेशं सहस्रं नित्यशो जपेत् । सर्वपापविनिर्मुक्तः प्राप्नुयाद्वाञ्छितां श्रियम् ॥ द्विसहस्राद्दशान्मुक्तिर्दीर्घायुस्त्रिसहस्रकृत् । सहस्रवृद्ध्या प्रजपन्सर्वान्कामानवाप्नुयात् ॥ आज्यान्वितैस्तिलैः शुद्धैर्जुहुयाल्लक्षमादरात् । उत्पातजनितान्क्लेशान्नाशयेन्नात्र संशयः ॥ शतलक्षं जपेत्साक्षाच्छिवो भवति मानवः ॥ पूर्वो मन्त्रः शक्तिरुद्धः कथितोऽष्टाक्षरो मनुः ॥ ऋष्यादयः पुरा प्रोक्ता देवो ह्यत्र उमापतिः ॥ इति पञ्चाक्षरशिवमन्त्रविधानम् ॥ ॥ अथाष्टाक्षरशिवमन्त्रविधानम् ॥ पूर्वमन्त्रैरेव षडङ्गानि । ततो देवं विचिन्तयेत् ॥ ध्यानम् ॥ बन्धूकाभं त्रिनेत्रं शशिशकलधरं स्मेरवक्त्रं

वहन्तं हस्तैः शूलं कपालं वरदमभयदं चाहहारं भजामि । वामोरुस्तम्भगायाः करवलविलसच्चारुरक्तोत्पलाया हस्तेनाश्लिष्टदेहं मणिमयविलसद्भूषणायाः प्रियायाः ॥ मनुलक्षं जपेन्मन्त्रं वद्धानासक्तमानसः । तत्सहस्रं प्रजुहुयादारग्वधसमिद्वरैः ॥ समिद्भिर्मधुरासिक्तैः....? पूर्वोक्ते पूजयेत्पीठे गन्धादिभिरुमापतिम् ॥ अङ्गावृतेर्बहिः पूज्या वक्षेसाधा यथापुरा । मध्ये प्राग्दक्षिणोदीच्यपश्चिमेषु विधानतः ॥ हृल्लेखाचांगनारक्ता रक्तदन्ती करालिका । महोच्छुष्मा क्रमादेता महाभूतसमप्रभाः ॥ पाशाङ्कुशवराभीतिधारिण्यः स्वस्वलक्षणाः । पूर्वादिपत्रेषु वृषभं क्षेत्रपालं दिगम्बरं चण्डेशं दुर्गां षण्मुखं नन्दिनं विघ्नेश्वरं सेनापतिं स्वस्वचिह्नविभूषितान् । ततो ब्राह्म्याद्या अष्टमातरस्ततो लोकपालानस्त्रादिसहितान्यजेत् । एवं यः पूजयेद्देवं गिरिजार्धमुमापतिम् । स भवेत्सर्वलोकानां प्रियः सौभाग्यसम्पदाम् ॥ इत्यष्टाक्षरशिवमन्त्रविधानम् ॥

॥ अथाघोरास्त्रविधानम् ॥

अथाभिधास्ये विधिवदघोरास्त्रमनुत्तमम् । यस्य संस्मरणादेव सर्वे नश्यन्त्युपद्रवाः ॥ मायास्फुरद्वयं भूयः प्रस्फुरद्वितयं ततः । घोरघोरतरेत्यन्ते तनुरूपपदं ततः ॥ चटयुग्मं वदन्ते स्यात्प्रचटद्वितयं पुनः ॥ कहयुग्मं वमद्वन्द्वं ततो बन्धयुगं पुनः ॥ घातयद्वितयं वर्म फडन्तः समुदीरितः । एकपञ्चाशद्वर्णोऽयं मन्त्रः सर्वार्थसाधकः । अघोरास्त्रमिति प्रोक्तः श्रीरुद्रस्य महामनुः ॥ ॐ ह्रीं स्फुरस्फुरप्रस्फुरप्रस्फुरघोरघोरतनुरूपचटचटप्रचटप्रचटकहकहवमवमबन्धबन्धघातयघातयहुंफट् ॥ इत्येकपञ्चाशत् ॥ अघोरोऽस्य मुनिः प्रोक्तश्छन्दस्त्रिष्टुबुदाहृतम् । अघोररुद्रो देवोऽस्य सर्वकार्यप्रसाधकः ॥ हृदयं पञ्चभिः पद्भिः शिरः शिखा दशभिः कवचं च । ततोऽष्टभिः नेत्रं अस्त्रं द्वाद

शभिरेवं विभक्तैर्मन्त्रार्णैः षडङ्गविधिः । मूर्धनेत्रास्यकण्ठेषु हृन्नाभ्यध्वरजालिङ्गे जानुजङ्घापदद्वयेषु रुद्रमिन्त्राक्षरैर्न्यसेत् । पञ्चभिः पङ्क्तिद्वाभ्यां अष्टभिश्चतुर्भिः करणैर्वेदयुगे रसैर्द्वाभ्यां वर्णभेदोऽयमीरितः ॥ अथ ध्यानम् ॥ सजलजलदश्यामं भीमदंष्ट्रं त्रिनेत्रं भुजगधरसघोरं रक्तवस्त्राङ्गरागम् । परशुडमरुखड्गान्खेटकं बाणचापौ त्रिशिखवरकपाले बिभ्रतं भावयामि ॥ अभिचारे गृहध्वंसे वश्ये कुङ्कुमसंनिभः । जारणे मेघसदृशो मुक्तौ चन्द्रसमप्रभः ॥ लक्षमेकं जपेन्मन्त्रं घृतसिक्तैस्तिलैः शुभैः । अयुतं जुहुयाच्छैवे पीठे संपूजयेच्छिवम् ॥ षट्कोणान्तस्थपङ्कजे अङ्गपूजा केसरेषु । पत्रेषु परशुं डमरुं खड्गं खेटकं बाणं कार्मुकं शूलं कपालमेवं प्रयोजयेदस्त्राणि । दलाग्रेषु ब्राह्म्याद्याः । ततो लोकेशांस्तदस्त्राणि च पूजयेत् । इति पूजाविधिः । मन्त्रेणानेन जप्तेन साधकः सिद्धिमाप्नुयात् । इष्टान्प्रयोगान्कुर्वीत सिद्धमन्त्रे नात्र संशयः । क्रमात्सर्पिरपामार्गतिलसर्षपपायसैः । पक्वैः सहस्रं प्रत्येकं यामिन्यां जुहुयात्सुधीः ॥ होमोऽयं नाशयेत्सद्यो भूतक्ष्वेलाद्युपद्रवान् ॥ सितकिंशुकनिर्गुण्डीहेमापामार्गसंभवैः । समिद्वरैः कृतो होमः पूर्ववद्भूतशान्तिदः ॥ अपामार्गारग्वधयोः पञ्चगव्यसमुक्षिताः । समिधो जुहुयात्कृष्णपञ्चम्यां निशि संयतः । पृथक्सहस्रहोमेन भूतानां निग्रहो भवेत् ॥ अघोरयन्त्रम् ॥ षट्कोणे शक्तिरन्तः स्फुरयुगलवृता प्रस्फुरद्वन्द्वकोणे शिष्टो मन्त्रस्य वर्णं रसकरणचतुःपद्चतुर्वेदवेदैः । पङ्क्तिः कृताष्टपत्रं दहनपुरयुगेनावृतं वर्मफड्भ्यां राजत्कोणेन वीतं धरणिपुरगतं यन्त्रमाघोरमेतत् ॥ क्षुद्रचौरग्रहव्यालभूतापस्मारनाशनम् । सर्वसिद्धिप्रदमिदं सर्वसंपत्प्रदायकम् ॥ इत्यघोरास्त्रविधानम् ॥ ॥अथ दक्षि-

णामूर्तिमन्त्रविधानम् ॥ प्रणवो हृदयं पश्चात्ततो भगवते पदम् । ङेयुतं दक्षिणामूर्तिं मह्यं मेधामुदीरयेत् ॥ प्रयच्छठद्वयान्तोयं द्वाविंशत्यक्षरो मनुः । ॐ नमो भगवते दक्षिणामूर्तये मह्यं मेधां प्रयच्छ स्वाहा ॥ मुनिरस्य स्मृतो ब्रह्मा छन्दो गायत्रमीरितम् । देवता दक्षिणामूर्तिर्वेदव्याख्यानतत्परः ॥ तारुद्धैः स्वरैर्दीर्घैः षड्भिरङ्गविकल्पना । वटमूले यजेद्देवं वक्ष्यमाणेन वर्त्मना ॥ ध्यानम् ॥ स्फटिकरजतवर्णं मौक्तिकीमक्षमालाममृतकलशविद्याज्ञानमुद्राः कराग्रैः । दधतमुरगकक्षं चन्द्रचूडं त्रिनेत्रं विधृतविविधभूषं दक्षिणामूर्तिमीडे ॥ लक्षमेकं जपेन्मन्त्रं ब्रह्मचारिव्रते स्थितः । जुहुयात्सघृतैः पयोभिर्दशांशं संस्कृतेऽनले ॥ शैवे पीठे यजेद्देवं वक्ष्यमाणेन वर्त्मना । अङ्गावृते कृते पश्चादष्टपत्रेषु पूजयेत् ॥ सरस्वतीं वाचयन्तीं पुस्तकं च सितानननाम् । ततो ब्रह्माणं सनकं सनन्दनं सनातनं सनत्कुमारं शुकं व्यासं गणेश्वरं क्रमात् । सिद्धयोगीन्द्रविद्याधरगणं बहिः पूजयेत् । बाह्ये लोकेश्वरान्पूज्य वज्रायायुधसंयुतान् ॥ इत्थं पूजादिभिः सिद्धे मन्त्रे च साधकोत्तमः । वल्लभो जायते वाचां वाचस्पतिरिवापरः ॥ मन्त्रेणानेन संजप्तैर्विशुद्धैः सलिलैः सुधीः । अभिषिञ्चेत्स्वशिरसि श्रियमारोग्यमाप्नुयात् । कण्ठमात्रोदके स्थित्वा जपेन्मन्त्रं सहस्रकम् । प्रत्यहं मण्डलादर्वाक्कवीनामग्रणीर्भवेत् ॥ गौर्याः पार्श्वस्थया सार्धं श्रीकामश्चिन्तयन्विभुम् । अयुतं प्रजपेन्मन्त्रं भूयसीं श्रियमाप्नुयात् ॥ सुस्नातः प्रयतो मन्त्री गोमूत्रे श्रृतमोदनम् । भिक्षान्नमथवा मन्त्रमयुतद्वितयं जपेत् ॥ अश्रुतान्वेदशास्त्रादीन्व्याचष्टे नात्र संशयः । सिद्धोऽयं दक्षिणामूर्तिमन्त्रः सर्वार्थसाधकः ॥

इति श्रीत्रिविक्रमभट्टारकस्य कृतौ मन्त्ररत्नमञ्जूषायां
चतुर्थः शिवमन्त्रपटलः ॥

## अथ पञ्चमः शक्तिपटलः ।

अथ मातृकानिरूपणम् ॥ अथ वर्णतनुं वक्ष्ये विश्वबोधविधायिनीम् । यस्यामनुपलब्धायां सर्वमेवज्ञगज्जडम् ॥ पञ्चाशद्वर्णात्मको मन्त्रः । अस्य ब्रह्मा ऋषिः । गायत्रीछन्दः । सरस्वती देवता । अङ्गीबह्वस्वदीर्घान्तर्गतैः कादिपञ्चवर्गकैः क्रमात् । षडङ्गानि विधेयानि जातियुक्तानि देशिकैः ॥ ध्यानम् ॥ पञ्चाशल्लिपिभिर्विभक्तमुखदोःपन्मध्यवक्षःस्थलां भास्वन्मौलिनिबद्धचन्द्रशकलामापीनतुङ्गस्तनीम् । मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजैर्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये ॥ ललाटमुखवृत्ताक्षिश्रुतिघ्राणेषु गण्डयोः । ओष्ठदन्तोत्तमाङ्गास्यदोःपत्सन्ध्यग्रकेषु च ॥ पार्श्वयोः पृष्ठतो नाभौ जठरे हृदयेंऽसके । ककुद्यंसे च हृत्पूर्वं पाणिपादयुगे ततः ॥ जठराननयोर्न्यसेन्मातृकार्णान्यथाक्रमात् ॥ दीक्षितः प्रजपेल्लक्षमुक्तन्यासादिपूर्वकम् । तद्दशांशेन जुहुयात्तिलैश्च मधुरोक्षितैः ॥ मातृकामन्वहं यजेद्वक्ष्यमाणेन वर्त्मना ॥ ॥ चक्रम् ॥ व्योमेन्दू रसनासकर्णिकमचां द्वन्द्वैः स्फुरत्केसरं पत्रान्तर्गतपञ्चवर्गयशलार्णादित्रिवर्गं क्रमात् । आशास्वस्रिषु ठान्तलाङ्गलियुजा क्षोणीपुरेणावृतं पद्मं कल्पितमत्र पूजयतु तां वर्णात्मिकां देवताम् ॥ मेधाप्रज्ञाप्रभाविद्याधीधृतिस्मृतिबुद्धयः । विद्येश्वरीति संप्रोक्ता भारत्या नव शक्तयः ॥ अङ्गैः प्रथमावरणम् । द्वितीयं स्वरयुगलैः । अष्टवर्गैस्तृतीयम् । व्यापिनीपालिनीक्लेदिनीधारिणीमालिनीहंसिनीशान्तिनी एताः पत्रेषु यजेत् । पश्चाद्ब्राह्मीमाहेश्वरीकौमारीवैष्णवीवाराहीन्द्राणीचामुण्डामहालक्ष्मीः पूज्याः । ततो लोकेशांस्ततो वज्रायस्त्राणि । अनेन विधिनोपचारैर्वर्णेशीमर्चयेत् । एवं

सिद्धे मनौ मन्त्री योगान्कुर्याद्यथेप्सितान् । अश्वत्थोदुम्बरप्लक्षन्यग्रोधसमिधस्तिलाः । सिद्धार्थपायसाज्यानि द्रव्याण्यष्टौ यथाक्रमम् । अमीभिर्जुहुयाल्लक्षं तदर्धं वा तदर्धकम् । सर्वान्कामानवाप्नोति परां सिद्धिं च विन्दति । एभिरर्कसहस्राणि हुत्वा मन्त्री विनाशयेत् । रिपून्क्षुद्रान्ग्रहान्भूतान्ज्वरान्सर्पान्सपन्नगान् । मन्त्राणामयथावृत्तिप्रतिपत्तिसमुद्भवान् । विकारान्नाशयेदाशु वायुरारोग्यवान्भवेत् । एभिस्त्रिमधुरोपेतैर्हुत्वा राजा भवेद्ध्रुवम् । एभिरेव च वश्यादीनपि साप्नोति मानवः ॥ इति मातृकाविधाननिरूपणम् ॥ ॥ अथ वाग्वादिनीसरस्वतीदशाक्षरमन्त्रविधानम् ॥ अत्रिर्वरुणसंरुद्धो वदवाग्वादिनि द्वयम् । वागीश्वर्या दशार्णोऽयं मन्त्रो वाग्विभवप्रदः ॥ वदवदवाग्वादिनिस्वाहा । कण्वोऽस्य ऋषिः । विराट्छन्दः । वाग्देवता । शिरःश्रवणदृग्घ्राणवदननामिगुदेष्विमान्वर्णान्न्यस्य पूर्वोक्ताङ्गानि कल्पयेत् ॥ ध्यानम् ॥ वरुणशकलमिन्दोर्बिभ्रती शुभ्रकान्तिः कुचभरनमिताङ्गी संनिषण्णा सिताब्जे । निजकरकमलोद्यल्लेखनीपुस्तकश्रीः सकलविभवसिद्ध्यै पातु वाग्देवता नः ॥ दशलक्षं जपेन्मन्त्रं दशांशं जुहुयात्तिलैः । वागीश्वरीति यजेत्पीठे अङ्गाद्यावरणैः सह । योगा सत्या च विमला ज्ञाना बुद्धिः स्मृतिः मेधा प्रज्ञा मुद्रा पुस्तकधारिणीः पत्रमध्ये द्वितीयावरणं यजेत् । दलाग्रेषु ब्राह्म्याद्यास्ततो लोकपालास्तदस्त्राणि बहिः । एवं संपूजयेन्मन्त्री जपहोमादितत्परः । स्नानन्यासादिभिः शुद्धः शुद्धदन्तनखादिकः । ब्रह्मचर्यरतः शान्तः सततं वाक्परायणः । वागीशीति स्मरन्मन्त्रं कवित्वं लभतेऽद्भुतः । पीत्वा तन्मन्त्रितं तोयं सहस्रं प्रत्यहं जपेत् । महाकविर्भवेन्मन्त्री वत्सरेण न संशयः । उरोमात्रोदके स्थित्वा ध्यायन्मार्तण्डमण्डले ।

देवीं प्रतिदिनं भक्त्या त्रिसहस्रं जपेन्मनुम् । लभते मण्डलात्सिद्धिं वाचामप्रतिमां भुवि । पलाशबिल्वकुसुमैर्जुहुयान्मधुरोक्षितैः । सम्पि-द्धिर्वा तदुत्थाभिर्यशः प्राप्नोति वाक्पतेः । होमोऽयं सर्वसौभाग्यल-क्ष्मीवश्यप्रदो भवेत् । राजवृक्षसमुद्भूतैः प्रसूनैर्मधुराप्लुतैः । तत्समि-द्भिश्च जुहुयात्कवित्वमतुलं लभेत् । इति वाग्वादिनीदशाक्षरविधानम् ॥

॥ अथ वाग्देवीषोडशाक्षरमन्त्रविधानम् ॥ हृदयान्ते भगवति वद-शब्दयुगं ततः । वाग्देवि वह्निजायान्तं वाग्भवाद्यं समुद्धरेत् ॥ ऐं न-मो भगवति वद वद वाग्देवि स्वाहा ॥ षोडशार्णोऽयम् । षड्भिः पादैः षडङ्गं कुर्यात् ॥ ध्यानम् ॥ शुभ्रां शुभ्रविलेपमाल्यवसनां शीतांशु-खण्डोज्ज्वलां व्याख्यामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ता-म्बुजैः । बिभ्राणां कमलासनां कुचनतां वाग्देवतां सुस्मितां वन्दे वाग्विभवप्रदां त्रिनयनां सौभाग्यसंपत्करीम् ॥ हविष्याशी जपेत्स-म्यग्लक्षं च वसुलक्षकम् । दशांशं जुहुयाच्चापि तिलैराज्यविमिश्रितैः । मातृकोक्ते यजेत्पीठे देवीं वागीश्वरीं क्रमात् । पिबेत्तन्मन्त्रितं तोयं प्रातःकाले दिनेदिने । विद्वान्वत्सरतो मन्त्री भवेन्नास्ति विचारणा । पुष्पगन्धादिकं सर्वं तन्मन्त्रं धारयेत्सुधीः । सभायां पूज्यते सद्भिर्वादे च विजयी भवेत् । अभिषिञ्चेज्जलैः शुद्धैरात्मानं स्नानकर्मणि । तर्पयेत्तां जलैः शुद्धैरतिमेधामवाप्नुयात् ॥ इति वाग्देव्याः षोडशाक्ष-रमन्त्रविधानम् ॥

॥ अथ वाग्देव्या एकादशाक्षरमन्त्रविधानम् ॥ तारो मायाधरो बिन्दुः शशिस्मरः सरस्वती । ङेन्तोप्यत्यन्तिको मन्त्रः प्रोक्त एकादशाक्षरः ॥ ॐ ह्रीं ऐं ह्रीं ॐ सरस्वत्यै नमः ॥ मन्त्रारम्भे भ्रुवोर्मध्ये नवरन्ध्रेषु च क्रमात् । मन्त्रवर्णान्न्यसेन्मन्त्री वाग्भवेना-ङ्गकल्पना ॥ ध्यानम् ॥ वाणीं पूर्णनिशाकरोज्ज्वलमुखीं कर्पूरकुन्द-

भमां चन्द्रार्धाङ्कितमस्तकां निजकरैः संबिभ्रतीमादरात् । वीणामक्षगुणं सुधाढ्यकलशं विद्यां च तुङ्गस्तनीं दिव्यैराभरणैर्विभूषिततनुं हंसाधिरूढां भजे ॥ जपेद्द्वादशलक्षाणि तत्सहस्रं सिताम्बुजैः । नागचम्पकपुष्पैर्वा जुहुयात्साधकोत्तमः । मातृकोक्ते यजेत्पीठे वक्ष्यमाणक्रमेण ताम् । देव्या दक्षिणतः पूज्या संस्कृता वाङ्मयी शुभा । प्राकृता वामतः पूज्या वाङ्मयी सर्वसिद्धिदा । इष्ट्वा पूर्ववदङ्गानि मन्त्री नियतमानसः । ततः पश्चात् प्रज्ञा मेधा श्रुतिः शक्तिः स्मृतिर्वागीश्वरी मतिः स्वस्तिश्चेति पूज्या आद्ययाद्यावदनन्तरं लोकेश्वरादस्त्राणि च । इति संपूजयेद्देवीं साक्षाद्वाग्वल्लभो भवेत् । दशाक्षरीसमुक्तानि कर्माण्यत्रापि साधयेत् ॥ इति वाग्देव्या एकादशाक्षरमन्त्रविधानम् ॥ ॥ अथान्ये सारस्वता मन्त्राः ॥ तोयस्थं शयनं विष्णोः सप्रेमलचतुर्मुखम् । बिन्द्वर्धीश्युतो वह्निर्बिन्दुसद्योम्बुमान्भृगुः ॥ उक्तानि त्रीणि बीजानि सद्भिः सारस्वतार्थिनाम् ॥ वाग्ह्रूंसौ ॥ अङ्गानि कल्पयेद्बीजैर्द्विकैर्जातिसंयुतैः ॥ ध्यानम् ॥ मुक्ताहारावदातां शिरसि शशिकलालंकृतां बाहुभिः स्वैर्व्यात्युवां वर्णाक्षमालां मणिमयकलशं पुस्तकं चोद्वहन्तीम् । आपीनोत्तुङ्गवक्षोरुहभरविनमन्मध्यदेशामधीशां वाचामीडे चिराय त्रिभुवनजननीं पुण्डरीके निपण्णाम् ॥ त्रिलक्षं प्रजपेन्मन्त्रं जुहुयात्तद्दशांशतः । पायसेनाज्यसिक्तेन संस्कृते हव्यवाहने ॥ वागीशीं पूजयेत्पीठे विधिना मातृकोदिते । वाक्प्रसृतेन मार्गेण प्रत्यहं साधकोत्तमः । ब्याघा(?)न्तकुसुमैर्हुत्वा वाक्सिद्धिमतुलां व्रजेत् ॥ जातीपुष्पैः सिताम्भोजैः सिक्तैश्चन्दनवारिणा । नन्द्यावर्तैः शुभैः कुन्दैर्हुत्वा वाक्सिद्धिमाप्नुयात् ॥ एवमुक्तेषु मन्त्रेषु दीक्षितो यतमानसः । एवं यो

भजते भक्त्या स भवेद्भुक्तिमुक्तिभाक् ॥ इति सारस्वतमन्त्रा निरूपिताः ॥ ॥ अथ श्रीमन्त्रविधिः ॥ वातं वह्निसमारूढं वामनेत्रेन्दुसंयुतम् । बीजमेतच्छ्रियः प्रोक्तं चिन्तारत्नमिवापरम् ॥ श्रीं ॥ अस्य मन्त्रस्य भृगुर्ऋषिः । निचृच्छन्दः । श्रीर्देवता । षट् दीर्घयुक्तेन बीजेनाङ्गानि कुर्यात् ॥ ध्यानम् ॥ कान्त्या काञ्चनसंनिभां हरगिरिप्रख्यैश्चतुर्भिर्गजैर्हस्तोत्क्षिप्तहिरण्मयामृतघटैरासिच्यमानां श्रियम् । बिभ्राणां वरमब्जयुग्ममभयं हस्तैः किरीटोज्ज्वलां क्षौमाबद्धनितम्बबिम्बललितां वन्देऽरविन्दस्थिताम् ॥ भानुलक्षं जपेन्मन्त्री दीक्षितो विजितेन्द्रियः । श्रियमभ्यर्चयेन्नित्यं सुगन्धिकुसुमादिभिः ॥ तत्सहस्रं प्रजुहुयात्कमलैर्मधुरोक्षितैः । तिलैर्वा बिल्वपत्रैर्वा फलैर्वा बिल्वजैस्तथा ॥ मधुरप्लुतैश्च प्रत्येकं त्रिभिर्वा साधकोत्तमः । अत्र सम्यग्यजेत्पीठे नवशक्तिसमन्विते ॥ विभूतिरुन्नतिः कान्तिः सृष्टिः कीर्तिश्च संनतिः । व्युष्टिरुत्कृष्टिरृद्धिश्च भूतिश्च रमाया नव शक्तयः ॥ अत्रावाह्य यजेद्देवीं परिवारयुतां श्रियम् । यजेत्पूर्ववदङ्गानि दिग्दलेषु समाहितः ॥ वासुदेवं सङ्कर्षणं प्रद्युम्नमनिरुद्धकम् । हिमपीततमालेन्द्रनीलाभान्पीतवाससः । शङ्खचक्रगदापद्मधारिणश्च यथाक्रमम् ॥ विदिग्दलेषु—दमकं सलिलं चैव गुग्गुलं च कुरण्टकम् । यजेच्छङ्खनिधिं देव्या दक्षिणे प्रमदान्वितम् । वामतः पङ्कजनिधिं प्रियया सहितं तथा ॥ दलाग्रेषु ॥ बलाकी विमला चैव कमला वनमालिका । विभीषिकामालिका च शांकरी वसुमालिका । पङ्कजद्वयधारिण्यो मुक्ताहारसमप्रभाः । एताः समभ्यर्च्य लोकपालांस्तदस्त्राणि च बहिः । इत्थं यो यजते देवीं सुस्थिरः साधकोत्तमः । धनधान्यसमृद्धः स्याच्छ्रियमाप्नोत्यनिन्दिताम् ॥ वक्षःप्रमाणे सलिले

स्थित्वा मन्त्रमिमं जपेत् ॥ त्रिलक्षं सुस्थिरो मन्त्री देवीं ध्यात्वार्कमण्डले । स भवेदल्पकालेन रमाया वसतिः स्थिरा ॥ विष्णुगेहस्थबिल्वस्य मूलमध्यस्य संस्थितः । त्रिलक्षं तु जपेन्मन्त्री वाञ्छितं लभते धनम् । अशोकवह्नौ जुहुयात्तन्दुलैराज्यलोडितैः । वशयेदचिरादेव त्रैलोक्यमपि मन्त्रवित् ॥ इति श्रीमन्त्रविधिः ॥ ॥ अपरः श्रीमन्त्रविधिः ॥ वाग्भवं वनिता विष्णोर्मोया मकरकेतनः ॥ ऐंश्रींह्रींक्लीं ॥ ऋष्यादिपूर्ववत् । अङ्गानि कुर्याच्छ्रीबीजेन दीर्घयुक्तेन ॥ ध्यानम् ॥ माणिक्यप्रतिमप्रभां हिमनिभैस्तुङ्गैश्चतुर्भिर्गजैर्हस्तग्राहितरत्नकुम्भसलिलैरासिच्यमानां सदा । हस्ताब्जैर्वरदानमम्बुजयुगाभीतीर्दधानां हरेः कान्तां काङ्क्षितपारिजातलतिकां वन्दे सरोजासनाम् ॥ भानुलक्षं हविष्याशी जपेदन्ते सरोरुहैः । जुहुयाद्दशणैः फुल्लैस्तत्सहस्रं जितेन्द्रियः ॥ रमायाः कल्पिते पीठे विधिमानेन पूजयेत् । कुर्यात्प्रयोगांस्तन्त्रस्थो मनुनानेन साधकः । निधिभिः सेव्यते नित्यं मूर्तिमद्भिरुपस्थितैः ॥ ॥ अथापरः श्रीमन्त्रविधिः ॥ दीर्घान्त्ययादिः सर्गान्तो मन्त्रा भानुपसंघरा । वान्तेसिन्यै प्रियावह्नेर्मनुः प्रोक्तो दशाक्षरः ॥ नमः कमलवासिन्यैस्वाहा ॥ अस्य दक्षऋषिः । विराट्छन्दः । श्रीर्देवता । देव्यै हृदयाय । पद्मिन्यै शिरसे । विष्णुपत्न्यै शिखायै । वरदायै कवचाय । कमलरूपायै अस्त्राय । नमोन्ताः प्रणवादिकाश्चाङ्गमन्त्राः ॥ ध्यानम् ॥ आसीना सरसीरुहे स्मितमुखी हस्ताम्बुजैर्बिभ्रती दानं पद्मयुगाभये च वपुषा सौदामिनीसंनिभा । मुक्तादामविराजमानपृथुलोत्तुङ्गस्तनोद्भासिनी पायाद्वः कमलाकटाक्षविभवैरानन्दयन्ती हरिम् ॥ दशलक्षं जपेदेनं मन्त्रं मुद्रासमन्वितः । दशांशं जुहुयान्मन्त्री मधुराक्तैः सरोरुहैः ॥

श्रीपीठे पूजयेद्देवीमङ्गाद्यावरणैः सह । बलाकाद्याश्च लोकेशास्तद्स्त्राणि च पूजयेत् ॥ एवं संपूजयेद्देवीं संपदामालयो भवेत् । समुद्रगायां सरिति कण्ठमात्रे जले स्थितः । त्रिलक्षं प्रजपेन्मन्त्रं साक्षाद्वैश्रवणो भवेत् ॥ इति श्रीमन्त्रविधिः ॥ ॥ अथ भुवनेश्वरीमन्त्रविधानम् ॥ अथ वक्ष्ये जगद्धात्रीमधुना भुवनेश्वरीम् । ब्रह्मादयोऽपि यां ज्ञात्वा लेभिरे श्रियमूर्जिताम् ॥ कुलीशो वह्निमारूढो वामनेत्रार्धचन्द्रवान् । बीजं तस्याः समाख्यातं सेवितं सिद्धिकाङ्क्षिभिः ॥ ह्रीं ॥ ऋषिः शक्तिर्भवेच्छन्दो गायत्री देवता मनोः । कथिता सुरसघेन सेविता भुवनेश्वरी ॥ षड्दीर्घयुक्तबीजेन कुर्यादङ्गानि षट् क्रमात् ॥ संहारसृष्टिमार्गेण मातृकान्यस्तविग्रहः । मन्त्रन्यास ततः कुर्यादेवताभावसिद्धये ॥ हृल्लेखां मूर्ध्नि वदने गगना हृदये तथा । रक्तां करालिकां गुह्ये महोच्छुष्मां पदद्वये । ऊर्ध्वं प्राग्दक्षिणोदीच्यपश्चिमेषु मुखेषु च ॥ सद्यादिह्रस्वबीजाद्या न्यस्तव्या भूतसप्रभाः । ब्रह्माणं सह गायत्र्या ललाटे विन्यसेत्ततः । सावित्र्या सहितं विष्णु कपोले दक्षिण परम् । वागीश्वरीयुतं वामकपोले च महेश्वरम् । श्रिया धनपतिं वामकर्णे रत्या स्मरं मुखे । पुष्टा गणपतिं सव्यकर्णे मूलं मुखे न्यसेत् । मूलेन व्यापकं कुर्यात्ततो देवीं विचिन्तयेत् ॥ ध्यानम् ॥ उद्यद्दिनद्युतिमिन्दुकिरीटां तुङ्गकुचां नयनत्रययुक्ताम् । स्मेरमुखीं वरदाङ्कुशपाशाभीतिकरां प्रभजेद्भुवनेशीम् ॥ जपेन्मन्त्रं च द्वात्रिंशल्लक्षं मन्त्री समाहितः । त्रिस्वादुयुक्तैर्जुहुयादष्टद्रव्यैर्दशांशतः । दत्वादर्घ्यं दिनेशाय तत्र सचिन्त्य देवताम् । षोडशदलावृताष्टपत्रकर्णिकायां षट्कोणं तद्वहिर्धर्मादिपीठ नवशक्तियुत । जया विजया अजिता

अपराजिता नित्या विलासिनी दोग्ध्री अघोरा मङ्गला नवशक्तयः। तत्र संपूजयेद्देवीमावाह्यावरणैः सह ॥ षट्कोणाद्बहिर्मध्ये च दिक्षु यथाक्रमं हृल्लेखाद्याः पृथिव्यादिभूतसमप्रभा वरपाशाङ्कुशाभीतिधारिण्योऽर्च्याः। ततोऽङ्गावरणम्। ततः पूर्वनिर्ऋतिवायुवह्निवरुणेशादिषट्कोणेषु यथाक्रमं मिथुनदेवताः। षट्कोणपार्श्वयोर्निधी। केसरेष्वङ्गानि पत्रेषु अनङ्गकुसुमा अनङ्गकुसुमातुरा अनङ्गमदना अनङ्गमदनातुराभुवनपालागगनवेगाशशिरेखागगनरेखाचेत्यष्टशक्तयः। ततः षोडशपत्रेषु करालीविकराल्युमासरस्वतीश्रीदुर्गोषालक्ष्मीः श्रुतिः स्मृतिः धृतिः श्रद्धा मेधा मतिः कान्तिरार्याः पूज्याः। पश्चाद्बहिः परिचारिकाः। अनङ्गरूपा अनङ्गमदनामदनातुराभुवनवेगाभुवनपालिकासर्वशिशिराअनङ्गवेदनाअनङ्गमेखलाः पूज्याः। ततः। लोकेशांश्च तदस्त्राणि देवीमित्थं प्रपूजयेत्। पूज्यते सकलैर्देवैः किं पुनर्मनुजोत्तमैः। मन्त्री त्रिमधुरोपेतैर्हुत्वाश्वत्थसमिद्वरैः। ब्राह्मणान्वशयेच्छीघ्रं पार्थिवान्पद्महोमतः। पालाशपुष्पैस्तत्पत्रैर्मन्त्रिणः कुमुदैरपि। शालिपिष्टमयीं कृत्वा पुत्तली मधुरान्विताम्। जप्तां प्रतिष्ठितप्राणां भक्षयेद्रविवासरे। वशं नयति राजानं नारीं वा नरमेव वा। कण्ठमात्रोदके स्थित्वा वीक्ष्य तोयगतं रविम्। त्रिसहस्रं प्रजपेन्मन्त्रसिद्धां कन्यां लभेत सः। अन्नं मन्त्रितं मन्त्री भुञ्जीत श्रीप्रसिद्धये। लिखित्वा भस्मना मायां ससाध्यां फलकादिषु। तत्काले दर्शयेद्यत्र सुखं सूयेत गर्भिणी। इति ॥ ॥ द्वितीयो भुवनेश्वरीमन्त्रः ॥ अनन्तो विन्दुसंयुक्तो मायामन्त्राग्निवारवान्। पाशादित्र्यक्षरो मन्त्रः सर्वधर्म्यफलप्रदः। आंह्रींक्रों ॥ ऋष्याद्याः पूर्वमुक्ताः स्युर्बीजैनाङ्गक्रिया मता ॥ ध्यानम् ॥ वराङ्कुशं पाशमभीतिमुद्रां करैर्वहन्तीं

कमलासनस्थाम् । बालार्ककोटिप्रतिमां त्रिनेत्रां भजेऽहमाद्यां भुवनेश्वरीं ताम् ॥ हविष्यभुग्जपेन्मन्त्रं तत्त्वलक्षं जितेन्द्रियः । चतुर्विंशतिसाहस्रैस्तिलैः पयोक्तैर्जुहुयात्ततः । हल्लेखाविहिते पीठे नवशक्तिसमन्विते । अर्चयेत्परया भक्त्या वक्ष्यमाणक्रमेण ताम् ॥ हल्लेखाद्या यजेदाशौ कर्णिकायां क्रमाद्बुधः । अङ्गानि केसरेषु स्युः पत्रेष्वा मातरः क्रमात् । इन्द्राद्यो लोकपालास्तदस्त्राणि च पूजयेत् । एवं संपूजयेद्देवीं साक्षाद्वैश्रवणो भवेत् । पूज्यते सकलैर्लोकैस्तेजसा भास्करोपमः । अनेनाधिष्ठितं गेहं निशि दीपसमाकुलम् । दृश्यते प्राणिभिः सर्वैर्मन्त्रस्यास्य प्रभावतः । सर्षपैर्लोणसंमिश्रैराज्यक्तैर्जुहुयान्निशि । राजानं वशयेत्सद्यस्तत्पत्नीरपि साधकः । अन्नवानन्नहोमेन श्रीमान्पद्महुताद्भवेत् । राजवृक्षसमुद्भूतैः पुष्पैर्हुत्वा कविर्भवेत् । अरोगी तिलहोमेन घृतेनायुरवाप्नुयात् । प्राक्प्रोक्तान्यपि कर्माणि साधयेत्साधकोत्तमः ॥ ॥ अथ त्वरितभगवतीमन्त्रविधानम् ॥ अतोऽभिधास्ये त्वरितां त्वरितं फलदायिनीम् । तारो माया सर्वबीजं ऋद्धिरीशस्वरान्विता । धूर्मस्तदन्तो भगवान्क्षश्री दीर्घतनुच्छदम् । सवर्तो भगवान्माया फडन्तो द्वादशाक्षरः । ॐह्रींहुंखच्छेक्षस्त्रींहुंक्षेह्रींफट् ॥ अस्यार्जुनऋषिः । विराट्छन्दः । त्वरिताख्या भगवती कौलान्ता सकलमनोरथप्रदा देवता । मायाविवर्जितान्वर्णान्मूर्ध्नि भाले गले हृदि । नाभिगुह्योरुयुग्मे च जानुजङ्घापदद्वये । विन्यसेद्व्यापकं वद्धत्समस्तेन च साधकः । खच्छेहृदयाय नमः । छेक्षशिरसे स्वाहा । क्षस्त्रीशिखायै वषट् । स्त्रीहुंकवचाय हुं । हुंक्षेनेत्रत्रयाय वौषट् । ह्रींफट्अस्त्राय फट् । इत्यङ्गविधिः ॥ अथ ध्यानम् ॥ श्यामां बर्हिकलापशेखरयुतामाबद्धपर्णांशुकां गुञ्जाहारलसत्पयोधरभरामष्टौ

द्विपान्विभ्रतीम् । ताटङ्काङ्गदमेखलां गुणरणन्मञ्जीरतां प्रापितां कैरातीं वरदाभयोद्यतकरां देवीं त्रिनेत्रां भजे ॥ लक्षं भजप्य मन्त्रज्ञो मन्त्रं मन्त्री जितेन्द्रियः । दशांशं जुहुयाद्बिल्वैर्मधुराक्तैः समिद्वरैः । हृल्लेखाकल्पिते पीठे मध्ये शक्तिसमन्विते । पूजयेत्त्वरितां देवीं वक्ष्यमाणविधानतः ॥ ॐक्षंहुंहंवज्रदेहमुरुहिलुलगर्जगर्जेहुंहुंक्षांप-ध्यानलायनमः ॥ पीठमन्त्रः । अनेन भासनं दत्वा मूर्तिं मूलेन कल्प-येत् । अङ्गैः प्रणीतां गायत्रीं केसरेष्वर्चयेत्क्रमात् ॥ दलेषु हुंकारीं चण्डीं द्रावणीं क्षेपणीं श्रियम् । हुंकारी क्षेमकारी च फट् बाह्ये बहिर-मतः कोदण्डधारिणीं । द्वारस्य पार्श्वयोर्हेमवेत्रधारिण्यौ जयाविजया-यक्षरक्षरक्तनरिताल्लसिरोभवहुंफट् । अनेन मनुना तत्र किंकरं समु-द्विजेयेत् । लकुटं बिभ्रतं कृष्णं कृतसर्वेरमूर्धजम् । आरण्यैररुणैः पुष्पैरतिशस्तैः सुगन्धिभिः । पूजयेद्धूपदीपाद्यैर्नृत्तगीतमनोहरैः । एवं सिद्धे मनौ मन्त्री नारीनरनरेश्वरैः ॥ मान्यते वत्सरादर्वाग्ल-क्ष्म्यायुक्तो महेश्वरः । योनिकुण्डं प्रकल्प्याथ कुर्याद्धोमं यथेच्छया ॥ मल्लिकाकुसुमैर्हुत्वा वशयेदखिलं जगत् । कृत्वात्रोह्यादिसमन पाला-शकुसुमैर्हुनेत् ॥ अशोकैः पुत्रमाप्नोति बन्धूकैरिष्टवाञ्छितम् । तत्फलैरीप्सितं धनं । पाटलैः सुन्दरीमिष्टां वशयेत् । वकुलैः कीर्तिः आम्रैर्दीर्घमायुः चम्पकैः कान्तिं सर्षपैः शत्रुनाशनं वकुलपत्रै-रुच्चाटनं शाल्मलीपत्रैः शत्रुनाशनं निम्बपत्रैर्विद्वेषणं माषहोमेना-मूकत्वं अयुतं होमसंख्या तावज्जपः ॥ इति त्वरितभगवतीमन्त्र-विधानम् ॥ ॥ त्वरिताया अपरं विधानम् ॥ क्षेस्त्रीक्षे ॥ वरयत्रिकण्टकी । द्विरुक्तैर्मन्त्रवर्णैरङ्गकल्पना ॥ ध्यानम् ॥ नीला नाभेरधस्तादरुणरुचिरधःकण्ठदेशात्सितास्या वर्मैर्दंष्ट्राकरालैरुदरपरि-

कमलासनस्थाम् । बालार्ककोटिप्रतिमां त्रिनेत्रां भजेऽहमाद्यां भुवनेश्वरीं ताम् ॥ हविष्यभुग्जपेन्मन्त्रं तत्त्वलक्षं जितेन्द्रियः । चतुर्विंशतिसाहस्रैर्मितैः पयोधैर्जुहुयात्ततः । इत्थं विहिते पीठे नवशक्तिसमन्विते । अर्चयेत्परया भक्त्या वक्ष्यमाणक्रमेण ताम् ॥ हल्लेखाद्या यजेदादौ कर्णिकायां क्रमाद्बुधः । अङ्गानि केसरेषु स्युः पत्रस्था मातरः क्रमात् । इन्द्राद्यो लोकपालान्दस्त्राणि च पूजयेत् । एवं संपूजयेद्देवीं साक्षाद्वैश्रवणो भवेत् । पूज्यते सकलैर्लोकैरन्नेनमा भास्करोपम. । अनेनाधिष्ठितं गेहं निशि दीपसमाकुलम् । दृश्यते प्राणिभिः सर्वमंत्रस्यास्य प्रभावतः । सर्पपैर्लोणसंमिश्रैराज्यान्ते जुहुयान्निशि । राजानं वशयेत्सद्यस्तत्पत्नीरपि साधकः । अन्नपानकहोमेन श्रीमान्पञ्चहुताद्भवेत् । राजवृक्षसमुद्भूतैः पुष्पैर्हुत्वा कविर्भवेत् । अरोगी तिलहोमेन घृतेनायुरवाप्नुयात् । शास्त्रोक्तान्यपि कर्माणि साधयेत्साधकोत्तमः ॥ ॥ अथ त्वरितभगवतीमन्त्रविधानम् ॥ अथोऽभिधास्ये त्वरितां त्वरितं फलदायिनीम् । तारो माया सर्वबीज ऋद्धिरीशस्वरान्विता । कूर्मस्तदन्तो भगवान्क्षकी दीर्घतनुच्छदम् । सवर्तो भगवान्माया फडन्तो द्वादशाक्षरः । ॐह्रींहुंखेच्छेक्षस्त्रीहुंक्षेह्रींफट् ॥ अस्यार्जुनऋषिः । विराट्छन्दः । त्वरिताख्या भगवती कौलान्ता सकलमनोरथप्रदा देवता । मायाविवर्जितान्वर्णान्मूर्ध्नि भाले गले हृदि । नाभिगुह्योरुयुग्मे च जानुजङ्घापदद्वये । विन्यसेद्व्यापकं चाङ्गसमस्तेन च साधकः । खच्छेहृदयाय नमः । छेक्षशिरसेस्वाहा । क्षस्त्रीशिखायैवषट् । स्त्रीहुंकवचायहुं । हुंक्षेनेत्रत्रयायवौषट् । ह्रींफडस्त्रायफट् । इत्यङ्गविधिः ॥ अथ ध्यानम् ॥ श्यामा बर्हिकलापशेखरयुतामानद्धपर्णांशुकां गुञ्जाहारलसत्पयोधरभरामष्टौ

द्विपान्विभ्रतीम् । ताटङ्काङ्गदमेखलां गुणरणन्मञ्जीरतां प्रापितां कैरातीं वरदाभयोद्यतकरां देवीं त्रिनेत्रां भजे ॥ लक्षं प्रजप्य मन्त्रज्ञो मन्त्रं मन्त्री जितेन्द्रियः । दशांशं जुहुयाद्बिल्वैर्मधुराक्तैः समिद्वरैः । हृल्लेखाकल्पिते पीठे मध्ये शक्तिसमन्विते । पूजयेत्त्वरितां देवीं वक्ष्यमाणविधानतः ॥ ॐश्रुंहुंहंवज्रदेहमुरुहिक्रुलगर्जगर्जेहुंहुंक्षांप-श्चाननायतमः ॥ पीठमन्त्रः । अनेन चासनं दत्वा मूर्ति मूलेन कल्पयेत् । अङ्गैः प्रणीतां गायत्रीं केसरेष्वर्चयेत्क्रमात् ॥ दलेषु हुंकारीं चण्डीं द्रावनीं क्षेपणीं स्त्रियम् । हुंकारी क्षेमकारी च फट् बाले बहिरप्रतः कोदण्डधारिणीं । द्वारस्य पार्श्वयोर्हेमवेत्रधारिण्यौ जयाविजया-यक्षरक्षत्वरिताज्ञास्थिरोभवहुंफट् । अनेन मनुना तत्र किंकरं तद्बहिर्जयेत् । लकुटं विभ्रतं कृष्णं कृतबर्बरमूर्धजम् । आरण्यैररुणैः पुष्पैरतिशस्तैः सुगन्धिभिः । पूजयेद्धूपदीपाद्यैर्नृत्तगीतमनोहरैः । एवं सिद्धे मनौ मन्त्री नारीनरनरेश्वरैः ॥ मान्यते वत्सरादर्वाग्लक्ष्म्यायुक्तो महेश्वरः । योनिकुण्डे प्रकल्प्याथ कुर्याद्धोमं यथेच्छया ॥ मल्लिकाकुसुमैर्हुत्वा वशयेदखिलं जगत् । कल्हाद्रोह्यादिशमनं पाला-शकुसुमैर्हुनेत् ॥ अशोकैः पुत्रमाप्नोति बन्धूकैरिष्टवाञ्छितम् । वल्कलैरीप्सितं धनं । पाटलैः सुन्दरीमिष्टां वशयेत् । वकुलैः कीर्तिः आम्रैर्दीर्घमायुः चम्पकैः कान्ति सर्षपैः शत्रुनाशनं वकुलपत्रै-रुचाटनं शाल्मलीपत्रैः शत्रुनाशनं निम्बपत्रैर्विद्वेषणं मापहोमेना-मूकत्वं अयुतं होमसंख्या तावज्जपः ॥ इति त्वरितभगवतीमन्त्र-विधानम् ॥ ॥ त्वरिताया अपरं विधानम् ॥ क्षेत्रीक्षे ॥ वश्यत्रिकण्टकी । द्विरुक्तैर्मन्त्रवर्णैरङ्गकल्पना ॥ ध्यानम् ॥ नीला नाभेरधस्तादरुणरुचिरधःकण्ठदेशात्सितास्या वक्त्रैर्दंष्ट्राकरालैरुदरपरि-

गतैर्भीषणाङ्गीं चतुर्भिः । दीप्तौ कम्बू रथाङ्गे करसरसिरुहैर्धारयन्ती जटान्तःस्फूर्जच्छीतांशुखण्डा भवतु भयहरी देवता वह्निनेत्रा ॥ एवं ध्यायन् त्रिलक्षं जपेत् । दशांशं सर्पिषा हुत्वा वशयेद्वनितानरान् ॥ ॥ अपरं त्वरिताविधानम् ॥ प्रणवोमायानित्यक्लिन्नेमदद्रवे द्विठान्तो द्वादशार्णो मन्त्रो वश्यप्रदायकः । ॐह्रींनित्यक्लिन्नेमदद्रवेस्वाहा । अङ्गिरास्य ऋषिः त्रिष्टुप्छन्दः वज्रप्रस्तारिणी पार्वती देवता । मायाबीजेनाङ्गक्लृप्तिः ॥ ध्यानम् ॥ रक्ताब्धौ रक्तपोते रविदलकमलाभ्यन्तरे संनिषण्णां रक्ताङ्गीं रक्तमौलिस्फुरितशशिकलां स्मेरवक्त्रां त्रिनेत्राम् । बीजापूरेषुपाशाङ्कुशमदनधनुःसत्कपालानि हस्तैर्बिभ्राणामानताङ्गीं स्तनभरभरणादम्बिकामाश्रयामः ॥ लक्षं जपेदिमं मन्त्रं साधकः शुद्धमानसः । अयुतं राजवृक्षोत्थैर्घृतसिक्तैः समिद्वरैः । शक्तिपीठे यजेद्देवीमरुणैः कुसुमादिभिः । अङ्गानि केसरेषु स्युस्ततोऽभ्यर्च्या दलेष्विमाः । हल्लेखा क्लेदिनी क्लिन्ना क्षोभणी मदनातुरा । निरंजना रागवती मदनावती मेखला द्राविणी वेगवती स्मराकपालोत्पलधारिण्यो रक्तविग्रहाः । मातरो दिग्विदिक्षु ततो दिगीश्वराः ॥ इमं मन्त्रं जपेद्यस्तु प्रयतः शुद्धमानसः । दारिद्र्यरोगनिर्मुक्तः स जीवेच्छरदां शतम् ॥ अस्य वशे जगद्वर्तते न संदेहः ॥ अनेन मुखक्षालनं अञ्जनं तिलकं पुष्पं मन्त्रितं जगद्वश्यकरं ताम्बूलं च खादितम् ॥ इति ॥ ॥ अथाश्वारूढाविधानम् ॥ पाशाङ्कुशयुता शक्तिर्झिण्टीशो गगनं सदृक् । परमेश्वरिशब्दान्ते द्विठान्तः प्रणवादिकः । ॐ आंह्रींक्रोंपाहिपरमेश्वरिस्वाहा ॥ त्रयोदशाक्षरो मन्त्रोऽश्वारूढायाः ॥ ॐ आंहृदयम् । ह्रींशिरः । क्रों शिखा । पाहिकवचं । परमेश्वरिनेत्रं । स्वाहाअस्त्रं ॥ ध्यानम् ॥ रक्तामश्वा-

धिरूढां शशिधरशकलाबद्धमौलिं त्रिनेत्रां पाशेनाबध्य साध्यां स्मरशरविवशां दक्षिणेनानयन्तीम् । हस्तेनान्येन वेत्रं वरकनकमयं धारयन्तीं मनोज्ञां देवीं ध्यायेदजस्रं कुचभरनमितां दिव्यहाराभिरामाम् ॥ बाणलक्षं जपेन्मन्त्रमाज्येन जुहुयाचतः । दशांशं भक्तितो देवीं शक्तिपीठे समर्चयेत् ॥ पाशाद्वित्र्यक्षरोक्तेन विधानेन समाहितः । आज्यान्नेन हुतान्मन्त्री वाञ्छितं लभते वसु ॥ लवणैर्मधुरासिक्तैर्होमेन वशयेन्नृपान् । अथो तेनैव विधिना वशये-द्वनितामपि । षोडशकोष्टकं विलिख्य अन्त्यभ्रुक्के प्रणवं ससाध्यम् । अन्येषु द्वादशमन्त्रवर्णांल्लिखेत् । इदं यन्त्रमशेषवश्यकरम् ॥ ॥ अन्नपूर्णामन्त्रविधानम् ॥ मायाहृद्भगवतिपदान्ते महेश्वरिपदं अन्नपूर्णे वह्निवधूः । रामदशाक्षरोऽन्नपूर्णाभवानीमन्त्रः ॥ ह्रींनमो-भगवतिमहेश्वरिअन्नपूर्णेस्वाहा ॥ अङ्गानि मायया कुर्यात्ततो देवीं विचिन्तयेत् ॥ ध्यानम् ॥ रक्तां विचित्रवसनां नवचन्द्रचूडामन्न-प्रदाननिरतां स्तनभारनम्राम् । नृत्यन्तमिन्दुशकलाभरणं विलोक्य हृष्टां भजेद्भगवतीं भवदुःखहन्त्रीम् । विकार २२ सहस्रं प्रजपेन्मन्त्रं साज्येनान्नेन दशांशं जुहुयात् । शक्तिपीठे यजेद्देवीमङ्गलोकेश्वरायुधैः । प्रातरेवं जपेन्मन्त्रं निलयष्टोत्तरं शतम् ॥ एतस्यान्नसमृद्धिः स्यान्म-हती श्रियया सह ॥ ॥ अथ बालात्रिपुराविधानम् ॥ अधरो बिन्दुमानाद्यं महेन्द्रस्थः शशीयुतः । द्वितीयं भृगुसर्गाढ्यो मनुस्तार्तीयमीरितः । ऐंक्लींसौः ॥ बाला त्रिपुरा त्रैलोक्यवशीकरिणी प्रकीर्तिता । ऋषिः स्याद्दक्षिणामूर्तिश्छन्दः पङ्क्तिः समीरितम् ॥ देवता देशिकैरुक्ता बाला त्रिपुरनामतः । नाभेराचरणं न्यसेद्वाग्भवं मन्त्र-वित्तमः । हृदयान्नाभिपर्यन्तं कामबीजं प्रविन्यसेत् । शिरसो

हृत्प्रदेशान्तं तार्तीयं विन्यसेत्ततः ॥ आद्यं द्वितीयं करयोस्तार्तीयमुभयोर्न्यसेत् । मूर्ध्न्याधारे हृदि न्यस्येद्भूयो बीजत्रयं क्रमात् ॥ नवयोन्यात्मकं न्यास कुर्याद्बीजैस्त्रिभिः पुनः । कर्णयोश्चिबुके एकः १ । शङ्खयोर्वदने २ । नेत्रयोर्नसि ३ । असयोः पिठरे ४ । कूर्परयोः कुक्षौ ५ । जानुनोर्ध्वजमूर्धनि ६ । पादयोर्गुह्यदेशे च ७ । पार्श्वयोर्हृदयाम्बुजे ८ । स्तनद्वये कण्ठदेशे ९ । रत्यादिमथ विन्यसेत् । मूले रतिं हृदि प्रीतिं भ्रूमध्ये च मनोभवाम् ॥ मूले सौः । हृदि क्लीं । भ्रूमध्ये ऐं । इति न्यसेत् । तैरेव बीजैस्तद्देवामृतेशीं योगेशीं विश्वयोनिं क्रमान्न्यसेत् ॥ मूर्तिन्यासमथाचरेत् ॥ स्वस्वबीजादिकं पूर्वं मूर्ध्नि ईशानं मनोभवसहितं न्यसेत् । वक्त्रे तत्पुरुषं रागकरध्वजं । हृदि अघोरं सकन्दर्पं । गुह्यदेशे वामदेवं समन्मथं । सद्योजातं सकामदेवं पादयोः । ऊर्ध्वप्राग्दक्षिणोदीच्यपश्चिमादिसुखेषु ताः । प्रविन्यसेद्यथापूर्वं भृग्वोर्योमाग्निसंस्थितः । सद्यादिपञ्चह्रस्वाढ्यो बीजमेषा प्रकीर्तितम् । ह्सौं ह्सें ह्स ह्सिं ह्सु सद्यदेवीबीजानि । पद्दीर्घयुक्तेनाद्यबीजेनाङ्गक्रिया मता । पञ्चबाणन्यासमाचरेत् ॥ मूर्ध्निद्रांविद्राविण्यैनमः । पदेद्रींक्षोभिण्यैनमः । वक्त्रेक्लींवशीकरिण्यैनमः । गुह्येब्लूंआकर्षिण्यैनमः । हृदि सः समोहिन्यैनम इति पञ्चबाणन्यासः । भालमध्यभ्रूवदनलम्बिकाकण्ठहृत्सु च नाभ्यन्धुपृष्ठाननयोः सुभगाभगाभोगसर्पिणी मगमालिनीअनङ्गाअनङ्गकुसुमाअनङ्गमेखलाअनङ्गमदना न्यस्तव्याः । मदविभ्रममन्थरा प्रधानदेवतासदृशा । अक्षस्रक्पुस्तकाभीतिवरदाढ्यकराम्बुजा । कुर्याद्भूषणन्यासम् । ततः शिरसिभालेभ्रूकर्णाक्षियुगलेनसिगण्डयोरोष्ठयोर्दन्तपङ्क्त्योरास्ये स्वरान्न्यसेत् । चिबुकेगलेकण्ठेपार्श्वयोः स्तनयु-

ण्मके । दोर्मूलयोः कूर्परयोः पाण्योस्तत्पृष्ठे नाभौ गुह्ये ऊर्वोर्जानुनोर्जङ्घयोः स्फिजोः पत्तलयोश्चरणाङ्गुष्ठयोः कादिरान्तान्न्यसेद्वर्णान्स्थानेष्वेषु समाहितः। काञ्च्यां ग्रैवेयके कटके हृदि गुह्यके कर्णकुण्डलयोर्मौलौ वललान् पक्षशान् सहौ अष्टाविमान्न्यसेत् । एवं न्यस्तशरीरोऽसौ ध्यायेद्देवीं समाहितः ॥ ध्यानम् ॥ उद्यद्बालुसहस्रकान्तिमरुणक्षौमां शिरोमालिकां रक्ताङ्गप्रपयोधरां जपवटीं विद्यामभीतिं वरम् । हस्ताब्जैर्दधतीं त्रिनेत्रविलसद्वक्त्रारविन्दश्रियं देवीं बद्धहिमांशुरत्नमुकुटां वन्दे समन्दस्मिताम् ॥ दीक्षां प्राप्य जपेन्मन्त्रं तत्त्वलक्षं जितेन्द्रियः । पुष्पैर्भानुसहस्राणि जुहुयाद्ब्रह्मवृक्षजैः ॥ त्रिमध्वाक्तैः प्रसूनैर्वा करवीरसमुद्भवैः । पद्मं वसुदलोपेतं नवयोन्याद्यकर्णिकम् ॥ इच्छादिशक्तिभिर्युक्तं त्रिपुरापीठमर्चयेत् ॥ इच्छा ज्ञाना क्रिया योगा कामिनी कामरूपिणी । रती रतिप्रिया नन्दा स्यानन्दा च मनोन्मनी ॥ वरदाभयधारिण्यो या उक्ता नवशक्तयः । गुरुपङ्क्तिं प्राग्वन्मध्ययोन्यन्तराले यजेत् । मध्ययोनौ देवीं पूजयेद्वक्ष्यमाणविधिना । देव्या वामकोणे रतिं शुभ्रां नतिं पाशधरां । प्रीतिं दक्षिणकोणे काञ्चनप्रभां अङ्कुशं प्रणतिं दधानां । अग्रे मनोभवां रक्तां दिक्षु कार्मुकपुष्पेषुधारिणीं । पश्चादङ्गानि यथास्थानं । तद्बहिर्दिक्ष्वग्रे च निजैर्मन्त्रैः पूजयेद्बाणदेवताः नतिपुष्पहस्ताः । अष्ट योनिष्वष्टशक्तीः सुभगादिकाः । अष्टपत्रेषु मातरो भैरवाङ्कस्था मदविह्वलाः । दिक्षु लोकपालाः तद्बहिस्तदस्त्राणि संपूजयेत् । पूर्वजन्मकृतैः पुण्यैर्ज्ञात्वेनां परदेवताम् । यो भजेत्कुलमार्गेण स भवेत्संपदां पदम् ॥ एवं सिद्धमनुर्मन्त्री साधयेदिष्टमात्मनः । जुहुयादरुणाम्भोजैरयोपेर्मधुराप्लुतैः ॥ लक्षसंख्यं तदर्धं वा प्रत्यहं

भोजयन्द्विजान् । वनिता युवती रम्याः प्रीणयेद्देवताधिया ॥ होमान्ते धनधान्याद्यैः प्रीणयेद्गुरुमात्मनः । एवं कृते जगद्वश्यो रमाया भवनं भवेत् ॥ पालाशकुसुमैर्हुत्वा वाक्सिद्धिं लभते ध्रुवम् । अनुलोमविलोमान्तस्थितसाध्याह्वयान्वितम् । मन्त्रमुच्चार्य जुहुयान्मधुराक्तैस्तिलैः शुभैः ॥ सर्षपैः श्वेतवर्णैस्तु पट्सहस्रकसंमितैः । वशयेत्पार्थिवान्सद्यस्तत्पत्नीस्तत्सुतानपि ॥ मालतीवकुलोद्भूतैः पुष्पैश्चन्दनलोलितैः । जुहुयात्स्त्रवित्ता मन्त्री लभते वत्सरान्तरे ॥ ह्रीं त्रिपुरादेवि विद्महे कामेश्वरि धीमहि । तन्नः क्लिन्ने प्रचोदयात् ॥ एषा त्रिपुरागायत्री प्रयुक्ता सर्वसिद्धिदा ॥ वियद्भृगुहुताशस्थो भौतिको विन्दुशेखरः । वियत्ववह्निदिवेन्द्रामिस्थित वामाक्षिविन्दुमत् ॥ आकाशभृगुवह्निस्थो मनुः सर्गेन्दुखण्डवान् । बीजत्रयात्मिका प्रोक्ता देवी त्रिपुरभैरवी । ह्सैं ह्स्क्लीं ह्स्रौः । पूजान्यासादिसर्वं पूर्ववत् । अल्पमेवानयोर्मन्त्रोरन्तरम् ॥ ॥ अथ दुर्गामनुविधानम् ॥ अथ दुर्गामनून्वक्ष्ये दृष्टादृष्टफलप्रदान् । मायाऽन्त्रिः वर्णयेन्द्वाढ्यो भूयोऽसौ सर्गवान्भवेत् ॥ पश्चात्तत्प्रतिष्ठावान्मरुतो भौतिकासनः । तारादिर्हृदयान्तोऽयं मन्त्रो वस्वक्षरात्मकः ॥ ॐ ह्रीं दु दुर्गायै नमः । नपि स्यान्नारदश्छन्दो गायत्रं देवता मनोः ॥ दुर्गा समीरिता सद्भिर्दुरितापन्निवारिणी । नतरहारविपुक्तेन मूलमन्त्रेण ह्राद्यैः सह षडङ्गानि । ॐह्रादु हृदयाय । ह्रींदु शिरसे । ह्रूं दु शिखायै । ह्रैंदु कवचाय । गाहौंदु नेत्राभ्याम् । यै ह्रः दु अस्त्रायेति ॥ ॥ अथ ध्यानम् ॥ सिंहस्था शशिशेखरा मरकतप्रख्यैश्चतुर्भिर्भुजैः शङ्ख चक्रधनुःशरांश्च दधती नेत्रैस्त्रिभिः शोभिता । आमुक्ताङ्गदहारकङ्कणरणत्काञ्चीकणन्नूपुरा दुर्गा दुर्गति-

हारिणी भवतु यो रत्नोल्लसत्कुण्डला ॥ वसुलक्षं जपेन्मन्त्रं तिलैर्मधु-रत्नोलितैः । पयोन्धसा वा जुहुयाच्चत्सहस्रं जितेन्द्रियः ॥ प्रभा माया जया सूक्ष्मा विशुद्धा नन्दिनी तथा । सुप्रभा विजया सर्वसिद्धिदा नव शक्तयः । अग्निर्ह्रस्वत्रयक्लीवरहितैः पूजयेदिमाः ॥ ॐवज्रनखदंष्ट्रायुधाय महासिंहाय हुं फट् नमः । पीठमन्त्रः । अनेन पूजयेत्पीठं नवशक्तियुतं पुरा । आवाह्य पूजयेद्देवीं वक्ष्यमाणेन वर्त्मना । पूर्वमन्त्रैः पञ्चाङ्गजया विजया कीर्तिः प्रीतिः प्रभा श्रद्धा मेधा श्रुतिः स्वनामाद्यक्षरादिकाः शक्तयः पूज्याः । पत्रामेष्वायुधानि । चक्रं शंखं गदाखड्गपाशाङ्कुशधरा धनुः । लोकेशांस्ततो बाह्ये तदस्त्राण्यनन्तरं यजेत् । एवं जपादिभिः सिद्धे मन्त्रे प्रयोगानाचरेत्सुधीः । प्रतिष्ठाप्यं विधानेन कलशान्नव शोभनान् । रत्नहेमादिसंयुक्तान्पदेषु नवसु स्थितान् ॥ मध्यस्थे पूजयेद्देवीमितरेषु जयादिकाः । संपूज्य गन्धपुष्पाद्यैरभिषिञ्चेन्नराधिपम् । राजा विजयते शत्रून् योधको विजयश्रियम् । प्राप्नोति रोगी दीर्घायुः सर्वव्याधिविवर्जितः । वन्ध्याभिषिक्ता विधिना लभते तनयं वरम् । मन्त्रेणानेन संजप्तमाज्यं क्षुद्रमहापहम् । गर्भिणीनां विशेषेण जप्तं भस्मादिकं तथा ॥

॥ अथ महिषमर्दिनीमनुविधानम् ॥ भान्तं वियत्सनयनं श्वेतोमर्दिनिठद्वयम् । महिषमर्दिनि स्वाहा । अष्टाक्षरीयमाख्याता महिषहिंसके हुंफट् हृदयम् । महिषशत्रो शार्वि हुंफट् शिरः । महिषं हेपयहेपय हुंफट्शिखा । महिषं हनहन देवि हुंफट् कवचम् । महिषसूदिनि हुंफट् अस्त्रम् । एवं षडङ्गानि प्रकल्पयेत् ॥ ध्यानम् ॥ गारुडोपलसंनिभां मणिमौलिकुण्डलमण्डितां नौमि भालविलोचनां महिषोत्तमाङ्गनिषेदुषीम् । चक्रशङ्खकृपाणखेटकबाणकार्मुकशूलकां तर्जनीमपि बिभ्रतीं

निजबाहुभिः शशिशेखराम् ॥ अष्टलक्षं जपेन्मन्त्रं तत्सहस्रं तिलैः शुभैः । हुत्वा प्रागीरिते पीठे यजेन्महिषमर्दिनीम् ॥ संपूज्याङ्गानि पत्रेषु शक्तीः दुर्गां वरवर्णिनीं आर्यां कनकप्रभां कृत्तिकां अभयप्रदां कन्यां सुरूपां दीर्घस्वरैः क्रमाद्यजेत् । अग्रे यजेदायुधानि चक्रशङ्खासिखेटकान् । बाणं बाणासनं शूलं कपालं यादिभिः क्रमात् । ततो यजेल्लोकपालांस्तदस्त्राण्यप्यनुक्रमात् । एवं सिद्धमनुर्मन्त्री साधयेदिष्टमात्मनः । वशयेत्तिलहोमेन नराव्नरपतीनपि । सिद्धार्थैर्जुहुयान्मन्त्री रोगान्मुच्येत तत्क्षणात् ॥ काकपक्षैः कृतो होमो द्वेषं वितनुते नृणाम् । मरीचहोमान्मरणं रिपुराप्नोति सर्वथा ॥ ॥ अपरं दुर्गामनुविधानम् ॥ तारो दुर्गे युगं रक्षमन्त्यो ढान्तं सुलोचनम् । द्विठान्ता जयदुर्गेयं सिद्धिदा हि दशाक्षरी ॥ ॐ दुर्गेदुर्गे रक्षिणि स्वाहा ॥ ॐ जय दुर्गे हृदयं दुर्गे शिर ईरितम् । दुर्गायै शिखा । भूतरक्षिणि कवचम् । दुर्गेदुर्गे रक्षिणि नेत्रं । स्वाहा अस्त्रम् । प्रणवादिः सर्वत्र ॥ ॥ अथ ध्यानम् ॥ कालाभाभां कटाक्षैररिकुलभयदां मौलिबद्धेन्दुरेखां चक्रं शङ्खं कृपाणं त्रिशिखमपि करैरुद्वहन्ती त्रिनेत्राम् । सिंहस्कन्धाधिरूढां त्रिभुवनमखिलं तेजसा पूरयन्ती ध्यायेद्दुर्गां जयाख्यां त्रिदशपरिवृतां सेवितां सिद्धिकामैः ॥ बाणलक्षं जपेन्मन्त्रं दशांशं जुहुयाद्धृवम् । तद्दशांशेन शक्त्या वा ब्राह्मणानपि भोजयेत् ॥ अष्टाक्षरोदिते पीठे पूजयेत्पूर्ववत्सुधीः । मन्त्रं जपन्निरोद्धुं शत्रून्हन्यादशेषतः ॥ प्रजपेद्व्यवहारादौ तत्रापि विजयी भवेत् । अर्चयेदस्त्रशस्त्राणि जयार्थी विद्ययानया ॥ ॥ अथान्यद्दुर्गामनुविधानम् ॥ ज्वलज्वलपदान्ते शूलिनिद्वितयं दुष्टग्रहमस्रान्ते वह्निजाया । अष्टाक्षरो मनुः । ज्वलज्वल शूलिनि शूलिनि

दुष्टग्रहहुंफट्स्वाहा । ऋषिर्दीर्घतमाः । ककुप्छन्दः । शूलिनीदेवता । दुर्गे हृदयम् । वरदे शीर्षम् । विन्ध्यवासिनिशिखा । असुरमर्दिनि युद्धप्रिये त्रासय त्रासय कवचम् । देवि सिद्धपूजिते नन्दिनि रक्ष महायोगीश्वरि अस्त्रम् । शूलिन्याद्या हुंफडन्ताः पञ्चाङ्गमनवः । शूलिनि दुर्गे हुंफडित्यादिप्रकारेण ॥ ॥ ध्यानम् ॥ अध्यारूढां मृगेन्द्रं सजलजलधरश्यामलां हस्तपद्मैः शूलं बाणं कृपाणीमरिजलजगदाचापपाशान्वहन्तीम् ॥ चन्द्रोत्तंसां त्रिनेत्रां चतसृभिरसिना खेटकं बिभ्रतीभिः कन्याभिः सेव्यमानां प्रतिभटभयदां शूलिनीं भावयामि ॥ वर्णलक्षं जपेन्मन्त्रं दशांशं सर्पिषा हुनेत् । प्रागुक्ते पूजयेत्पीठे वक्ष्यमाणेन वर्त्मना ॥ प्रथममङ्गानि पत्रेषु शक्तयः दुर्गा वरदा विन्ध्यवासिनी असुरमर्दिनी युद्धप्रिया देवसिद्धपूजिता नन्दिनी महायोगीश्वरी । दलेषु अस्त्राणि लोकपालाः पश्चात्पूज्याः । तत ईप्सितान्कुर्वीत प्रयोगान् ॥ अष्टोत्तरसहस्रं यस्तिलैश्च मधुराप्लुतैः । नित्यं वा जुहुयात्तस्य शक्तिः स्यादतिमानुषी ॥ बहुना किमिहोक्तेन मनसा यद्यदीप्सितम् । तत्सर्वमचिरेणैव साधयेत्साधकोत्तमः ॥ ॥ अपरं दुर्गामनुविधानम् ॥ उत्तिष्ठपदं पश्चात्पुरुषि किंतस्वपिषि भयं मे समुपस्थितमुच्चार्य यदि शक्यमशक्यं वा तन्मे भगवति शमय ठद्वयं निगदितो मन्त्रः सप्तत्रिंशदक्षरः । अस्यारण्यकऋषिः अनुष्टुप्छन्दः । वनदुर्गादेवता दुर्गतिमोचनी । पादाष्टसंधिषु गुदलिङ्गापरोदरे पार्श्वहृत्स्तनकण्ठेषु मुखनासाकपोलाक्षिकर्णभ्रूमध्यमूर्धसु मन्त्राक्षराणि विन्यसेत् ॥ पदत्रिभिश्चतुर्भिरष्टभिरष्टभिः पङ्क्तिरिन्द्रियैर्मन्त्रार्णैरङ्गकॢप्तिः ॥ ॥ ध्यानम् ॥ सौवर्णाम्बुजमध्यगां त्रिनयनां सौदामिनीसंनिभां चक्रं शङ्खं वराभ

तीमिन्दोः कलां बिभ्रतीम् । ग्रैवेयाङ्गदहारकुण्डलधरामाखण्डलाद्यैः स्तुतां ध्यायेद्विन्ध्यनिवासिनीं शशिमुखीं पार्श्वस्थपञ्चाननाम् ॥ एवं ध्यात्वा जपेल्लक्षचतुष्कं दशांशं जुहुयाद्धविषा शालिभिः सर्पिषा तिलैश्च । प्रागीरिते यजेत्पीठे देवीम् । अङ्गानि पूर्वं दलमूलेषु आर्यादुर्गा भद्राभद्रकाली अम्बिकाक्षेम्यावेदगर्भाक्षेमंकरीत्यष्टशक्तयः पूज्याः । अस्त्राणि पत्रमध्येषु शङ्खचक्रासिखेटकबाणकोदण्डशूलकपालानि । दलाग्रे ब्राह्याद्यास्ततो लोकपालाः पूज्याः । एवं सिद्धमन्त्री प्रयोगेषु देवीमित्थं विचिन्तयेत् ॥ कालपावकसंनिभा कलितार्धचन्द्रमनोरहां भालनेत्रविभीषणां भयदा च सिंहनिषेदुषीम् । चक्रशङ्खकृपाणखेटकचापबाणकरोटिका त्रिशूलबाहिभुजां भजेद्विजिताखिलासुरसैनिकाम् ॥ प्रातःस्नानरतो नित्यमष्टोत्तरसहस्रकम् । जपेत्तस्याशु सिद्ध्यन्ति धनधान्यादिसंपदः॥ अनेनैव विधानेन महत्क्षुद्ररिपून् जयेत् । नाभिमात्रोदके स्थित्वा देवीमर्कगतां स्मरन् । जपेदष्टोत्तरशतं लभते महतीं श्रियम् । अयुतं पयसृष्ठोक्तैः मन्त्रज्ञैरर्चितेऽनले । होमं समिद्भिः कुर्यान्नाशयत्यापदां कुलम् । अपामार्गसमिद्भिर्वा तिलैर्वा काननोद्भवैः । सर्षपैर्वा कृतो होमः क्षुद्रापस्मारनाशनः ॥ अभीष्टसिद्ध्यै जुहुयादार्कैश्चैव समिद्वरैः । सहस्रमर्कवारादिदिवसान्दश संयतः । बहुना किमिहोक्तेन मनसा यद्यदीप्सितम् । जगदम्बार्चको मन्त्री तत्सिद्ध्यति न संशयः ॥

इति त्रिविक्रमभट्टारककृतौ मन्त्ररत्नमञ्जूषायां
पञ्चमः शक्तिपटलः ॥ ५ ॥

---

## अथ वैष्णवमन्त्रविधानं नाम षष्ठः पटलः ॥ ६ ॥

अथ वक्ष्ये महामन्त्रान्वैष्णवान्शुभदायकान्। तारं नमःपदं ब्रूयान्नारौ दीर्घसमन्वितौ ॥ पावनो नाममन्त्रोऽयं प्रोक्तो वस्वक्षरान्वितः ॥ ॐनमोनारायणाय ॥ अस्य साध्यनारायणऋषिः। दैवीगायत्रीछन्दः। अव्ययो विष्णुर्देवता। क्रुद्धोल्काय हृदयं। महोल्काय शिरः। वीरोल्काय शिखा। द्युल्काय कवचम्। सहस्रोल्कायास्त्रम्। भूयोवर्णैर्मनोः षड्भिः षडङ्गानि। अवशिष्टः कुक्षिपृष्ठयोः। मन्त्रवर्णान् तनौ न्यसेत्। आधारे नाभौ हृदये वक्त्रे दोःपन्मूलेष्वेकः। नासिकाकण्ठनाभिहृत्कुक्षिपार्श्वपृष्ठेषु मूर्धास्यनेत्रश्रवणघ्राणेष्वेकः। दोःपादमध्याङ्गुलीषु धातुप्राणेषु। हृत्स्थले मूर्धेक्षणास्यहृत्कुक्षिसोरजङ्घापदद्वये। एकैकशो न्यसेद्वर्णान्गण्डांसोरुपदेषु च। चक्रशङ्खगदाम्भोजपदेष्वथहितो न्यसेत् ॥ एवं न्यासौ तनौ कृत्वा नारायणं ध्यायेत् ॥ ध्यानम् ॥

उद्यत्कोटिदिवाकराभमनिशं शङ्खं गदां पङ्कजं चक्रं बिभ्रतमिन्दिरावसुमतीसंशोभिपार्श्वद्वयम्। कोटीराङ्गदहारकुण्डलधरं पीताम्बरं कौस्तुभोद्दीप्तं विश्वधरं स्ववक्षसि लसच्छ्रीवत्सचिह्नं भजे ॥ चिकारलक्षं प्रजपेन्मनुमेवं समाहितः। दशांशं च सरसिजैर्जुहुयान्मधुराप्लुतैः ॥ वक्ष्यमाणे यजेत्पीठे देवमभ्यर्चयेत्सुधीः ॥ विमलोत्कर्षिणी ज्ञाना क्रिया योगा ततः परम्। प्रह्वी सत्या तथेशानानुग्रहा नवमी मता ॥ इति नवशक्तियुते पीठे। आवाह्य पूजयेद्देवं सुगन्धिकुसुमादिभिः। अङ्गान्यभ्यर्च्य मन्त्रार्णान्केसरेषु। दलेषु वासुदेवादीन् वासुदेवं संकर्षणं प्रद्युम्नं चानिरुद्धकं। दिक्पत्रेषु कोणदलेषु तच्छक्तयः शान्तिं श्रियं सरस्वतीं रतिं। दलाग्रेष्वस्त्राणि चक्रं शङ्खं गदां कमलं कौस्तुभं मुसलं खड्गं वनमालिकां पूर्वादि यथाक्रमम्। बहिरग्रे कुङ्कुमप्रभं गरुडं देवस्य

दक्षिणोत्तरपार्श्वयोर्निधी । ध्वजं वरुणदिग्भागे । आग्नेय्यां विघ्नं । निशाचरे आर्यं । वायुकोणे दुर्गां । ईशे सेनान्यं । ततः इन्द्रादीन् आयुधसंयुतान्यजेत् । इति पूजयन्विष्णुं धर्मार्थकामान् लब्ध्वा अन्ते विष्णोः सायुज्यमाप्नुयात् ॥ ॥ अथ विष्णोर्द्वादशाक्षरमन्त्रविधानम् ॥ प्रणवो ह्भगवते वासुदेवाय । द्वादशाक्षरो मन्त्रः । प्रजापतिर्ऋषिः । गायत्री छन्दः । वासुदेवो देवता । तारेण हृदयं । नमसा शिरः । चतुर्भिः शिखा । पञ्चभिः कवचम् । समस्तेनास्त्रमित्यङ्गकल्पना । मूर्ध्नि भाले दृशोरास्ये गलदोर्हृदयाम्बुजे । कुक्षौ नाभौ ध्वजे जानुद्वये पादद्वये न्यसेत् । द्वादशाक्षराणि ॥ ध्यानम् ॥ विष्णुं शारदचन्द्रकोटिसदृशं शङ्खं रथाङ्गं गदामम्भोजं दधतं सिताब्जनिलयं कान्त्या जगन्मोहनम् । आबद्धाङ्गदहारकुण्डलमहामौलिस्फुरत्कङ्कणं श्रीवत्साङ्कमुदारकौस्तुभधरं वन्दे मुनीन्द्रैः स्तुतम् ॥ वर्णलक्षं जपेदेनं दीक्षितो विजितेन्द्रियः । तत्सहस्रं प्रजुहुयाभिरालोड्य परिप्लुतैः ॥ पीठे प्रागीरिते वासुदेवं सम्यग्यजेत्सुधीः । अङ्गैराद्या वृतिः । वासुदेवादिभिर्द्वितीया शान्त्यादिशक्तिसहिता । तृतीया द्वादशमूर्तिभिः । चतुर्थी लोकनाथैः । पञ्चमी तदायुधैः । एवं संपूजितो विष्णुः प्रदद्यादिष्टमात्मनः । पायसेन घृताक्तेन मन्त्रवर्णसहस्रकम् ॥ जुहुयान्मनसः शुद्ध्यै समिद्भिः क्षीरभूरुहाम् । तत्संख्यया पयोक्ताभिः सर्वपापविमुक्तये ॥ ॥ अथ विष्णोश्चतुर्दशाक्षरमन्त्रविधानम् ॥ हृल्लेखाबीजयुगलं रमाबीजयुगं पुनः । लक्ष्म्यन्ते वासुदेवाय हृदन्तः प्रणवादिकः ॥ ॐ ह्रीं ह्रीं श्रीं श्रीं लक्ष्मीवासुदेवाय नमः । चतुर्दशाक्षरः । हृदयं शक्तिबीजाभ्यां श्रीबीजाभ्यां शिरः । द्वाभ्यां शिखा । वासुदेवाय वर्म । नमसा

अर्धं । सर्वं तारादिकम् ॥ ध्यानम् ॥ विद्युच्चन्द्रनिभं वपुः कमलजावैकुण्ठयोरेकतां प्राप्तं स्नेहवशेन रत्नविलसद्भूषाभिरालंकृतम् । विद्यापङ्कजदर्पणं मणिमयं कुम्भं सरोजं गदां शङ्खं चक्रममूनि बिभ्रदमितां दिश्याच्छ्रियं वः सदा ॥ वर्णलक्षं जपेदेनं तत्सहस्रं सरोरुहैः । होमं कुर्याद्द्विहसितैर्मधुरत्रयसंयुतैः ॥ पूजा स्याद्वैष्णवे पीठे द्वादशाक्षरवर्त्मना । पायसेन कृतो होमो लक्ष्मीवश्यप्रदायकः । मधुराक्तैस्तिलैर्हुत्वा सर्वकार्याणि साधयेत् ॥ ॥ अथ विष्णोरष्टादशाक्षरमन्त्रविधानम् ॥ तारो हृद्विष्णवे ङेन्तं सुरपतिसमन्वितम् । महाबलायठद्वन्द्वमनुरष्टादशाक्षरः । ॐ नमोविष्णवे सुरपतये महाबलाय स्वाहा । मन्त्रः । ऋषिरिन्दुर्विराट्छन्दो देवता दधिवामनः । हृदेकेन शिरो द्वाभ्यां शिखा त्रिभिरुदाहृता । कवचं पञ्चभिस्तावद्भिर्नेत्रं द्वाभ्यामस्त्रमित्यङ्गविधिः । मूर्ध्नि भाले दृशोर्युग्मे कर्णयुग्मोष्ठतालुषु । कण्ठे बाहुद्वये चैव हृदयोदरनाभिषु । गुह्योरुजानुयुग्मेषु जङ्घयोः पादयोर्न्यसेत् । अष्टादशमनोर्वर्णान्पश्चाद्देवं विचिन्तयेत् ॥ ध्यानम् ॥ मुक्तागौरं नवमणिलसद्भूषणं चन्द्रसंस्थं भृङ्गाकारैरलकनिकरैः शोभिवक्त्रारविन्दम् । हस्ताब्जाभ्यां कनककलशं शुद्धतोयातिपूर्णं दध्यन्नाढ्यं कनकचषकं धारयन्तं भजामः ॥ गुणलक्षं जपेन्मन्त्रं तद्दशांशं घृतप्लुतैः । पायसान्नैः प्रजुहुयाद्दध्यन्नैर्वा यथाविधि ॥ चन्द्रान्तं कल्पिते पीठे वामनं देवमर्चयेत् । ययासंपत्त्योपचारैर्वक्ष्यमाणविधानतः ॥ केसरेष्वङ्गपूजा । ततो वासुदेवादीन् ध्वजादीतर्चयेत्ततः । दलाग्रेषु केशवादीन्लोकपालानन्तरम् । ततो वज्रादीन् । ततो गजानष्टौ सप्तमावरणम् । एवं संपूज्य । पायसान्नेन जुहुयात्सहस्रं श्रियमाप्नुयात् । धान्यहोमेन धान्यानि द्रवपुष्पीसमुद्भवैः । बीजैः

सहस्रसंख्यातैर्होमो भयविनाशनः । दध्योदनेन शुद्धेन हुत्वा मुच्येत
दुर्गतः । स्मृत्वा त्रैविक्रमं रूपं जपेन्मन्त्रं सहस्रकम् । मुक्तो बन्धाद्भ-
वेत्सद्यो नात्र कार्या विचारणा । पट्टे संपाद्य देवेशं भित्तौ वा प्रजपे-
त्सुधीः । सुगन्धिकुसुमैर्नित्यं महतीं श्रियमश्नुते ॥ अष्टपत्रं पद्मं संसाध्य
तारकर्णिकं अष्टाक्षरकेसरं मन्त्राक्षरद्वन्द्वाष्टपत्रं अन्त्यवर्णलसदन्त्यपत्रं
द्वादशाक्षरसंवीतं तद्बहिर्मातृकाक्षरैर्वीतं यन्त्रं सर्वसंपत्प्रदायकम् ॥

॥ अथ षडक्षरमन्त्रविधानम् ॥ अनन्तोऽग्न्यासनः सेन्दुर्बीजं रामायहृ-
न्मनुः । षडक्षरोऽयमादिष्टो भजतां कामदो मणिः ॥ ब्रह्मास्य मुनिरुद्दि-
ष्टश्छन्दो गायत्रमीरितम् । देवतास्य समाख्यातो रामो राक्षसमर्दनः ॥
दीर्घभाजा स्वबीजेन कुर्यादङ्गानि षट् क्रमात् । ब्रह्मरन्ध्रे भ्रुवोर्मध्ये
हृन्नाभ्यन्धुषु पादयोः । षडक्षराणि विन्यसेन्मन्त्रस्य ॥ ॥ ध्यानम् ॥

कालाम्भोधरकान्तिकान्तमनिशं वीरासनाध्यासिनं मुद्रां ज्ञानमयीं
दधानमपरं हस्ताम्बुजं जानुनि । सीतां पार्श्वगतां सरोरुहकरां विद्यु-
न्निभां राघवं पश्यन्तं मुकुटाङ्गदादिविविधाकल्पोज्ज्वलाङ्गं भजे ॥

वर्णलक्षं जपेन्मन्त्रं दशांशं कमलैः शुभैः । जुहुयादर्चिते वह्नौ ब्राह्म-
णान्भोजयेत्ततः ॥ पूजयेद्वैष्णवे पीठे । श्रीं सीतायै स्वाहेत्यनेन
सीतां पार्श्वगतां यजेत् । अग्रे पार्श्वद्वये शार्ङ्गं शरानङ्गानि तद्बहिः ।
हनूमन्तं ससुग्रीवं भरतं सविभीषणम् ॥ लक्ष्मणाङ्गदशत्रुघ्नान्
जाम्बवन्तं दलेष्विमान् ॥ वाचयन्तं हनूमन्तमग्रतो धृतपुस्तकम् ॥
यजेद्भरतशत्रुघ्नौ पार्श्वयोर्धृतचामरौ । धृतातपत्रं हस्ताभ्यां लक्ष्मणं
पश्चिमे यजेत् ॥ दृष्टिं जयन्तं विजयं सुराष्ट्रं राष्ट्रवर्धनम् । अकोपं
धर्मपालाख्यं सुमन्त्रं च दलाग्रतः ॥ अङ्गानि केसरेषु स्युर्लोकेशा-
नर्चयेत्ततः । ततो यजेच्चदस्त्राणि वज्रादीनि क्रमेण तु । एवं पूजा-

द्भिः सिद्धे मन्त्री कर्माणि साधयेत् ॥ जातिप्रसूनैर्जुहुयाच्चन्दनाम्भःसमुक्षितैः । राजवश्याय कमलैर्धनधान्यादिसंपदे । नीलोत्पलानां होमेन वशयेदखिलं जगत् ॥ बिल्वप्रसूनैर्जुहुयादिन्दिरावाप्तये नरः । दूर्वाहोमेन दीर्घायुर्भवेन्मन्त्री निरामयः ॥ रक्तोत्पलैर्हुनेन्मन्त्री धनमाप्नोति वाञ्छितम् । मेधाकामेन होतव्यं पलाशकुसुमैर्नवैः । तज्जप्तमम्भः प्रपिबेत्कविर्भवति वत्सरात् । तन्मन्त्रितान्नं भुञ्जीत महदारोग्यमाप्नुयात् ॥ ॥ दशाक्षररामममन्त्रविधानम् ॥ तारं मध्ये विलिख्य सुमनुं पट्सु कोणेषु सन्धिष्वङ्गं मायां स्मरमपि लिखेत्कोणगण्डेषु पश्चात् । किञ्जल्केषु स्वरगणमथो पत्रमध्ये च मालामन्त्रोक्तांश्चैव शाश्वद्वहसुपत्तुमिवाष्टमे पञ्चवर्णान् ॥ दशाक्षरेण संवेष्ट्य कादिवर्णैश्च भूपुरे । दिग्विदिक्षु लिखेद्बीजे नारसिंहवराहकौ । ॐ नमो भगवते रघुनन्दनाय रक्षोगणविनाशकाय मधुरप्रसन्नवदनायामिततेजसे बलाय रामाय विष्णवे नमः ॥ उक्तश्च मालामन्त्रोऽयं समस्तपुरुषार्थदः । अयुतं प्रजपेन्मन्त्रं सहस्रं जुहुयात्तिलैः । अन्यत्पञ्चक्षरवदाचरेत् । हुं जानकीवल्लभाय स्वाहा । दशाक्षरोऽयं श्रीरामनन्त्रः सर्वार्थसाधकः । लक्षमेकं जपेन्मन्त्रं दशांशं जुहुयात्तिलैः । कमलैर्वा घृतपन्नं समस्तफलदम् ॥ ॥ त्रयस्त्रिंशदक्षरवराहमन्त्रविधानम् ॥ तारं नमो भगवते वराहरूपाय भूर्भुवःस्वःपतये भूपतित्वं मे देहि ददापयस्वाहा । त्रयस्त्रिंशदक्षरो वराहमन्त्रः सर्वसमृद्धिदः । भार्गवऋषिः । अनुष्टुप्छन्दः । आदिवराहो देवता एकदंष्ट्राय हृदयम् । व्योमोल्काय शिरः । तेजोधिपतये शिखा । विश्वरूपाय वर्म । महादंष्ट्रायास्त्रम् । पञ्चाङ्गविधिरीरितः ॥ ध्यानम् ॥ आपादं जानुदेशाद्वरकनकनिभं नाभिदेशादधस्तान्मुक्ताभं कण्ठदेशादरुणरविनिभं

मस्तकान्नीलभासम् । ध्यायेद्धस्तैर्दधानं रथचरणदरौ खङ्गखेटौ ग च शक्तिं दानाभये च क्षितिधरणलसद्दंष्ट्रमाद्यं वराहम् ॥ लक्ष्मेः जपेन्मन्त्रं मधुराक्तैः सरोरुहैः । जुहुयात्तद्दशांशेन पीठे विष्णो प्रपूजयेत् ॥ पूर्वादिषु चतुर्दिक्षु हृदाद्यङ्गानि पूजयेत् । अथ कोणे अधश्चोर्ध्वे च चक्राद्यस्त्राणि । तद्बहिः चक्रं शङ्खं असिं खेटं गद शक्तिं च । संपूज्य बाह्ये लोकेशांस्तदस्त्राणि च तद्बहिः । ध्यानादेवं घनं दद्याज्जपाद्दद्याद्वसुंधराम् । भानूदये भौमवारे साध्यक्षेत्रात्समाः हरेत् ॥ मृत्तिकां संजपेन्मन्त्रं तां पुनर्विभजेत्त्रिधा । चुल्ह्यामेकांश- मालिप्य पाकपात्रे तथाऽपरम् । गोदुग्धे परमालोड्य शोधिते तन्दु लान्क्षिपेत् ॥ संस्कृतेऽग्नौ पचेत्सम्यक्चरुं मन्त्री जपन्मनुम् । अव- तीर्य चरुं पश्चादग्नौ देवं यथाविधि । धूपदीपादिकैरिष्ट्वा पुनराज्यप्लुतं चरुम् । जुहुयादेधिते वह्नौ यावदष्टोत्तरं शतम् ॥ एवं सप्तारवारेषु जुहुयात्क्षेत्रसिद्धये । शालिभिर्जुहुयान्मन्त्री नित्यमष्टोत्तरं शतम् ॥ समृद्धैर्धान्यसंघातैः शोभते तस्य मन्दिरम् । तावदाज्येन जुहुया- न्मण्डलात्स्वर्णमाप्नुयात् । लाजैः कन्यामवाप्नोति सध्याक्तैर्निजवा- ञ्छितम् ॥ ॥ चक्ररूपहरिमन्त्रविधानम् ॥ तारो भृगुर्वियच्चैव तदाद्यं वह्निदीर्घयुक् । पावकः कवचास्त्रान्तो मनुः सप्ताक्षरः स्मृतः । ॐ सहस्रारहुंफट् । अहिर्बुध्न्यऋषिः । अनुष्टुप्छन्दः । चक्ररूपी हरिर्देवता । आचक्राय हृदयम् । विचक्राय शिरः । सुचक्राय शिखा । धीचक्राय कवचम् । संचक्राय नेत्रम् । ज्वालाचक्रायास्त्रमिति षड- ङ्गविधिः । प्रत्येकं द्विठान्तं । ऐन्द्रीं दिशं चक्रेण बध्नामि नमश्चक्राय स्वाहा । इत्यनेन प्रकारेण प्रतिदिशं बध्नीयात् । त्रैलोक्यं रक्षरक्ष- हुंफट्स्वाहा इति प्रणवादिरग्निप्राकारमन्त्रः । अनेन प्रकारेणात्मरक्षां

कुर्यात् । सितरक्ताञ्जनप्रख्यं ताराख्यं मूर्ध्नि विन्यसेत् । अन्यानभिनिभान्वर्णान्भ्रुवोर्मध्ये मुखे हृदि । गुह्यजानुपदद्वन्द्वसंधिषु क्रमशो न्यसेत् ॥ अथ ध्यानम् ॥ देहेनाग्निप्रकाशं त्रिभुवनमखिलं तेजसा पूरयन्तं रक्ताक्षं पिङ्गकेशं रिपुकुलभयदं भीमदंष्ट्राट्टहासम् । शङ्खं चक्रं गदाब्जे पृथुतरमुसलं चापपाशाङ्कुशान्स्वैर्बिभ्राणं दोर्भिराद्यं मनसि मुररिपुं भावयेच्चक्रसंज्ञम् ॥ अर्कलक्षं जपेन्मन्त्रं जुहुयात्तत्सहस्रकम् । तिलैश्च सर्षपैः पद्मैर्बिल्वैर्दुग्धोदनैः क्रमात् ॥ विष्णुपीठे यजेद्देवमङ्गानि च ततः परम् । दलाग्रेषु । चक्रं शङ्खं गदां पद्मं मुसलं सशरं धनुः॥ पाशमङ्कुशं च क्रमाद्यजेत् । ततो लक्ष्मीं सरस्वतीं रतिं प्रीतिं कीर्तिं कान्तिं तुष्टिं पुष्टिं यजेत्ततः । इन्द्राद्यांश्चास्त्राणि तद्बहिः । इति सिद्धे मनौ मन्त्री प्रयोगान्कर्तुमर्हति । आत्मनो वा परार्थं वा दृष्टादृष्टफलप्रदान् । दूर्वाहोमेन दीर्घायुः । पद्मैः श्रीः । मल्लपुष्पकुसुमैर्मेधाम् । गव्येनाज्येन गाः । उदुम्बरसमिद्धोमेन पुत्रांश्चाप्नोति मानवः ॥ प्रलयाग्निसमं चक्रं यस्य मूर्ध्नि विचिन्तयेत् । सप्ताहाज्ज्वरमूर्च्छार्तो मण्डलान्मृतिमेति सः । आकारादि स्वरावीतं याद्यियादिपदावृतम् । सकारं चिन्तयेच्छत्रोर्मूर्ध्न्युच्चाटनमाप्नुयात् । अनेनैव विधानेन मण्डलान्म्रियते रिपुः । अपामार्गस्य समिधः सर्पिर्गव्यघृतश्चरुः । आज्यमेतानि जुहुयादष्टोत्तरशतं पृथक् । साधकाय पुनर्दद्याच्चरुं संपातसाधितम् । अभिचारकृता द्रोहास्तस्य नश्यन्ति सर्वथा ॥ ॥ अथाष्टाक्षरश्रीकरमन्त्रविधानम् ॥ उत्तिष्ठपदमाभाष्य श्रीकोपीशहुताशनः । वह्निजायाविधिर्मन्त्रो वस्वक्षरसमन्वितः ॥ ॐ उत्तिष्ठ श्रीकरस्वाहा । अस्य नामदेव ऋषिः । पङ्क्तिश्छन्दः । श्रीकराख्यो हरिर्देवता । हृदयं नीपयद्वन्द्वं त्रासयद्वितयं

शिरः । शिखा प्रमर्दययुगं वर्म प्रध्वंसयद्वयम् । अस्त्रं रक्षयुगम् सर्वे हुमन्ताममन्त्राः । मूर्ध्नि नेत्रद्वये कण्ठे हृदयोदरयोः ऊरुजङ्घापदद्वन्द्वे मन्त्रवर्णान्न्यसेत् । मुखे न्यसेद्ब्राह्मणोऽस्य मुखमासीदिति मनुम् । बाहुयुग्मके बाहू राजन्य इति । ऊरूतदस्य यद्वैश्य इति ऊरुयुग्मे । पद्भ्यां शूद्रो अजायत इति पादयुग्मे । शङ्खं चक्रं गदां पद्मं हस्ताग्रेषु विन्यसेद्देवे आत्मन्यपि । एवं विन्यस्तदेहोऽसौ चिन्तयेद्देवमन्ततः ॥ ध्यानम् ॥ काञ्चनादिसमप्रभं कमलासनं कमलेक्षणं चक्रशङ्खगदासरोजधरं मनोहरदर्शनम् । कौस्तुभाङ्कितवक्षसं मुकुटाङ्गदादिविभूषणं तार्क्ष्यवाहनमादराद्धृदि भावयामि जगत्पतिम् ॥ अष्टलक्षं जपेन्मन्त्रं तद्दशांशं हुनेदथ । बिल्वक्षीरवृक्षसमित्पयोभैश्च समप्रभैः(?) । सर्पिषा च ततो हुत्वा गुरुं संतोषयेद्धनैः । वैष्णवे पीठे अङ्गानि यजेत् । दिक्पत्रेषु श्रियं धृतिं कान्तिं कलापङ्कजधारिणं विदिक्षु पत्रेषु वासुदेवाय । पार्श्वयोर्निधियुग्मं । विष्वक्सेनं यजेदीशे लोकपालाननन्तरम् । एवं संपूज्य देवेशं साधयेदिष्टमात्मनः । दूर्वाङ्कुराभ्यां साज्याभ्यां जुहुयादयुतं बुधः । संपादितं चरुं पश्चात्साज्यो भुञ्जीत साधितम् । ब्राह्मणान्भोजयेत्सम्यङ् मधुरैर्भौमवासरे । तोषयेद्गुरुमर्घ्येन वस्त्रैर्धान्यैर्विभूषणैः । जित्वापमृत्युरोगादीन्दीर्घमायुः स विन्दति । आज्यसिक्तैः सरसिजैर्जुहुयादयुतत्रयम् । निवसेत्कमला तस्मिन् जह्यात्तद्युवानपि । बिल्ववृक्षसमिद्धोमात्साम्राज्यधनपतिर्भवेत् । जलाञ्जलिभिरात्मानमभिषिञ्चेद्दिनेदिने । स्नानकाले तु स भवेत्सौभाग्यधीसमृद्धिमान् । संध्याद्वयोरधा मन्त्री पश्यन्नादित्यमण्डलम् । सत्मानं (?) जपेन्मन्त्रं नित्यं निशितधीर्मनुम् ॥ सर्वे मनोरथास्तस्य सिध्येयुर्नात्र संशयः ॥ इत्यष्टाक्षर-

श्रीकराख्यो मन्त्रः ॥ ॥ अथाष्टादशाक्षरगोपालमन्त्रविधानम् ॥ कृष्णायपदमाभाष्य गोविन्दाय ततः परम् । गोपीजनपदस्यान्ते वल्लभाय द्विठावधिः ॥ क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा । इत्यष्टादशाक्षरः । कामबीजादिराख्यातो मनुरष्टादशाक्षरः । क्लीं कामबीजम् । अस्य नारद ऋषिः । गायत्रीच्छन्दः । श्रीकृष्णो देवता । क्लीं बीजं । स्वाहा शक्तिः । सर्वपुरुषार्थसिद्ध्यर्थे विनियोगः । चतुःकरणवेदाब्धिनेत्रसंख्याक्षरैः क्रमात् । पञ्चाङ्गानि ॥ ध्यानम् ॥ स्मरेद्वृन्दावने रम्ये मोहयन्तमनारतम् । गोविन्दं गोपबालांश्च गोपकन्यासहस्रकम् ॥ आत्मनो वदनाम्भोजप्रेषिताक्षमधुव्रताः । पीडिताः कामबाणेन चिरमाश्लेषणोत्सुकाः ॥ मुक्ताहारलसत्पीनतुङ्गस्तनभरानताः । स्रस्तधम्मिल्लवदना मदस्खलितभाषणाः ॥ दन्तपङ्क्तिप्रभोद्भासिस्पन्दमानाधराञ्चिताः । विलोभयन्तीर्विविधैर्विभ्रमैर्भावगर्भितैः ॥ यथा ॥ फुल्लेन्दीवरकान्तिमिन्दुवदनं बर्हावतंसं प्रियं श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम् । गोपीनां नयनोत्पलार्चिततनुं गोगोपवृन्दान्वितं गोविन्दं कलवेणुवादनपरं दिव्याङ्गभूषं भजे ॥ मन्त्रमेतं यथान्यायमयुतद्वितयं जपेत् । जुहुयादरुणाम्भोजैस्तद्दशांशं समाहितः ॥ वैष्णवे पूजयेत्पीठे यथावद्देवमच्युतम् । अङ्गानि केसरेष्वग्रे प्रयजेत्प्रियया सह ॥ कालिन्दीनाग्नजितीकौरव्यामित्रविन्दाचारुहासिनीजाम्बवती । रुक्मिणीसत्यभामेति कथिताश्चारुभूषणाः । पीताम्बरधराः सौम्याः कराञ्जलिधृताम्बुजाः । बहिरैरावतादीनष्टौ गजाँल्लोकपालांस्तदस्त्राणि च पूजयेत् । इति संपूजयेद्देवं गोविन्दं जगतां पतिम् । कुर्वीत कल्पनिर्दिष्टान्प्रयोगान्निजवाञ्छितान् । लक्ष्मीमिच्छन्प्रजुहुयात्कमलैर्मधुसंयुतैः । आज्येनान्नेन जुहु-

यादाज्यान्नस्य प्रवृद्धये । आरण्यैः कुसुमैर्विप्रान् जातीभिः पृथिवीपतीन् । प्रसूनैरसितैर्वैश्यान्शूद्रान्नीलोत्पलैर्नवैः । वशयेद्‌रुणैः सर्वान्पङ्कजैर्वनिताजनान् । गोशालासु कृतो होमः पायसेन ससर्पिषा । गवां शान्तिं करोत्याशु गोविन्दो गोकुलप्रियः । शिशुवेषधरं देवं किंकिणीजालमण्डितम् । स्मृत्वा प्रतापयेन्मन्त्री (?) दुग्धवृक्षा शुभैर्जलैः ॥ धनधान्यांशुकादीनि प्रीतस्तस्मै ददाति सः ॥ इत्यष्टादशाक्षरो गोपालमन्त्रः ॥ ॥ अथ षडक्षरगोपालमन्त्रविधानम् ॥ स्मर कृष्णाय ठद्वन्द्वं षडर्णो मनुरीरितः । मन्त्रवर्णैर्द्विरुक्तैः षडङ्गन्यासविधिः । ऋषिध्यानादिपूर्ववत् । दशलक्षं जपेदेनं दशांशं कमलैर्हुनेत् । पूर्वोक्तेनैव मार्गेण पूजयेदेवमन्वहम् ॥ प्रयोगांश्चैव तत्रत्यान्कुर्वीत नियतः शुचिः । इति षडक्षरो गोपालमन्त्रः ॥ ॥ अथ दशाक्षरो गोपालमन्त्रः ॥ ॐ गोपीजनवल्लभाय स्वाहा । इति दशाक्षरो मन्त्रः पूर्ववत् ॥ ॥ अथाष्टाक्षरगोपालमन्त्रः ॥ अनन्तकृष्णगोविन्दौ ङेन्तावष्टाक्षरो मनुः ॥ ॐ क्लीं कृष्णायगोविन्दाय ॥ शेषं पूर्ववत् ॥ ॥ अथ षोडशाक्षरो मन्त्रः ॥ ॐनमः कृष्णायदेवकीपुत्रायहुंफट्स्वाहा ॥ इति षोडशार्णो मन्त्रः । ऋष्यादिपूर्ववत् ॥ ॥ अथ चतुस्त्रिंशदक्षरो गोपालमन्त्रः ॥ ॐ गंक्लींनमोभगवते नन्दपुत्रायबालवपुषेश्यामलायगोपीजनवल्लभायस्वाहा ॥ अनुष्टुप्छन्दः । जपस्त्वत्र लक्षसंख्याको ज्ञेयः ॥ इति चतुस्त्रिंशदक्षरो गोपालमन्त्रः ॥ ॥ अथ संतानगोपालमन्त्रः ॥ ॐ क्लीं देवकीसुत गोविन्द वासुदेव जगत्पते । देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥ अनुष्टुप्ज्ञातव्यः । पादैः समस्तेन च प्राक्तनमङ्गपञ्चकं कुर्यात् । एतेषां सर्वेषामृषिध्यानादिपूर्ववज्ज्ञेयम् ॥ इति गोपा-

लमन्त्रा निरूपिताः ॥ _ ॥ अथ कामदेवमन्त्रविधानम् ॥ मह्मा भूम्यासनः शान्तिबिन्दुभूषितमस्तकः । बीजं रतिपतेः प्रोक्तं जगत्त्रितयमोहनम् ॥ क्लीं इति । कः मह्मा । लः भूमिः । शान्तिः ईकारः । ऋषिः संमोहः । गायत्री छन्दः । देवो मकरध्वजः । बीजेन दीर्घयुक्तेन षडङ्गविधिः ॥ ध्यानम् ॥ जपारुणं रत्नविभूषणाढ्यं मीनध्वजं चारुकृताङ्गरागम् । कराम्बुजैरङ्कुशमिन्दुचापं पुष्पेषुपाशौ दधतं भजामि ॥ लक्षत्रयं जपेन्मन्त्रं मधुरत्रयसंयुतैः । पुष्पैः किंशुकजैः फुल्लैर्जुहुयाद्दशांशतः ॥ वक्ष्यमाणे यजेत्पीठे विधिना मकरध्वजम् ॥ मोहिनी क्षोभिणी त्रासिनी स्तम्भिनी आकर्षणी द्राविणी आह्लादिनी क्लिन्ना क्लेदिन्यः पीठशक्तयः । तस्मिन्पीठे यजेद्देवं वक्ष्यमाणेन वर्त्मना । अङ्गावरणं पूर्वं मध्ये विश्वर्चयेच्छरान् । द्रांबाणं शोषणं पूर्वं द्रांबाणं मोहनं ततः ॥ संदीपनाय क्लीं बाणं ब्लूंबाणं तापनं तथः । सर्गाख्यं भृगुणा भूयो मदनं पञ्चमं यजेत् । प्रणामबाणहस्ताख्या ध्येयास्ता बाणदेवताः । पत्रमध्येष्वनङ्गरूपा अनङ्गमदनातुरा अनङ्गमन्मथा अनङ्गकुसुमातुरा अनङ्गशिरा अनङ्गमाला अनङ्गदीपिका लीलाकमलधारिण्यः स्मेरवक्त्राः सुभूषिताः ॥ पूज्या बहिः षोडशपत्रेषु षोडशशक्तयः । युवतिर्विप्रलम्भा च ज्योत्स्ना सुभ्रूर्मदद्रवा । सुरता वारुणी लोला कान्तिः सौदामिनी ततः । कामच्छत्रा चन्द्रलेखा शुका च मदनावती । ज्योतिर्मायावती चैव कह्लारविलसत्कराः । दलाग्रेषु स्मरमपि चरत्कादियुतं यथा । शोको मोहो विलासश्च विभ्रमो मदनातुरः । अपत्रपो युवा कामो चूतपुष्पो रतिप्रियः ॥ ग्रीष्मस्तापात्ययश्चोष्मा हेमन्तः शिशिरो मदः । इक्षुकार्मुकपुष्पेषुधरा रक्ताः सुभूषिताः ॥ अपराङ्गानि षण्णार्यो नमितासक्तमानसाः । रति-

याद्राज्यान्नस्य प्रवृद्धये । आरण्यैः कुसुमैर्विप्रान् जातीभिः पृथिवीपतीन् । प्रसूनैरसितैर्वैश्यान्छूद्रान्नीलोत्पलैर्नवैः । वशयेदरुणैः सर्वान्पङ्कजैर्वनिताजनान् । गोशालासु कृतो होमः पायसेन ससर्पिषा । गवां शान्तिं करोत्याशु गोविन्दो गोकुलप्रियः । शिशुवेषधरं देवं किंकिणीजालमण्डितम् । स्मृत्वा प्रतापयेन्मन्त्री (?) दुग्धबुद्ध्या शुभैर्जलैः ॥ धनधान्यांशुकादीनि प्रीवत्सस्मै ददाति सः ॥ इत्यष्टादशाक्षरो गोपालमन्त्रः ॥ ॥ अथ षडक्षरगोपालमन्त्रविधानम् ॥ स्मर कृष्णाय ठद्वन्द्वं षडर्णो मनुरीरितः । मन्त्रवर्णैर्द्विरुक्तैः षडङ्गन्यासविधिः । ऋष्यिध्यानादिपूर्ववत् । दशलक्षं जपेदेनं दशांशं पद्मलैर्हुनेत् । पूर्वोक्तेनैव मार्गेण पूजयेद्देवमन्वहम् ॥ प्रयोगांश्चैव तन्त्रत्यान्कुर्वीत नियतः शुचिः । इति षडक्षरो गोपालमन्त्रः ॥ ॥ अथ दशाक्षरो गोपालमन्त्रः ॥ ॐ गोपीजनवल्लभाय स्वाहा । इति दशाक्षरो मन्त्रः पूर्ववत् ॥ ॥ अथाष्टाक्षरगोपालमन्त्रः ॥ अनन्तकृष्णगोविन्दौ ङेन्तावष्टाक्षरो मनुः ॥ ॐ क्लीं कृष्णायगोविन्दाय ॥ शेषं पूर्ववत् ॥ ॥ अथ षोडशाक्षरो मन्त्रः ॥ ॐनमः कृष्णायदेवकीपुत्रायहुंफट्स्वाहा ॥ इति षोडशार्णो मन्त्रः । ऋष्यादिपूर्ववत् ॥ ॥ अथ चतुस्त्रिंशदक्षरो गोपालमन्त्रः ॥ ॐ गंक्लींनमोभगवते नन्दपुत्रायबालवपुषेश्यामलायगोपीजनवल्लभायस्वाहा ॥ अनुष्टुप्छन्दः । जपस्त्वत्र लक्षसंख्याको ज्ञेयः ॥ इति चतुस्त्रिंशदक्षरो गोपालमन्त्रः ॥ ॥ अथ संतानगोपालमन्त्रः ॥ ॐ ह्रीं देवकीसुत गोविन्द वासुदेव जगत्पते । देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥ अनुष्टुप्ज्ञातव्यः । पादैः समस्तेन च प्राक्तनमङ्गपञ्चकं कुर्यात् । एतेषां सर्वेषामृषिध्यानादिपूर्ववज्ज्ञेयम् ॥ इति गोपा-

प्रियानष्टदिक्षु यजेत् । परभृत्सारसौ शुकसारिकटोत्कटाः । श्वेत-
चामरधारिण्यः सर्वाभरणभूषिताः ॥ अपाङ्गभूषिताः सर्वा हावभावैः
प्रकीर्तिताः । चतुरस्रकोणेषु रत्यस्तत्परिचारिकाः । माधवी मालती
चैव हरिणी च मदोत्कटा । श्वेतचामरधारिण्यः सर्वाभरणभूषिताः ।
बाह्ये यजेल्लोकपालांस्तदस्त्राणि च पूजयेत् । इत्थं यो भजते कामं
सुगन्धिकुसुमादिभिः । स भवेल्लब्धसौभाग्यो लक्ष्म्या जितधनेश्वरः ॥
अशोकपुष्पैर्दध्यक्तैर्जुहुयाच्च दिनत्रयम् । अष्टोत्तरसहस्रं यः स भवे-
ज्जगतां प्रियः । गन्धेनाक्तेन जुहुयात्सक्षेणाष्टोत्तरं शतम् । साधयेन्द्रः
ससंपातमर्चयेद्द्रव्यवाहने । संपाताज्येन वनितां भोजयेदात्मनः
प्रियाम् । अनया यद्दृतोऽभीष्टं तत्तस्य कुरुते सदा । कन्यार्थी जुहु-
याल्लाजैर्दध्यक्तैर्मण्डलान्तरे । चत्वारिंशता मण्डलम् । कन्यामिष्टा-
मवाप्नोति सार्पीष्टं पतिमाप्नुयात् ॥ वामान्तस्थितयागमष्टविलसत्प-
ट्कोणकं सद्रुदिर्गोपश्रीगुणवर्णवसुदलं मालामनोरक्षरैः । षट्संख्यैः
सहितादृपद्मलसितं क्षोणीपुरेणावृतं कोणन्यस्तमनोभवेन चषितं
यन्त्रं जगन्मोहनम् ॥ कामदेवाय विद्महे पुष्पबाणाय धीमहि ।
तन्नोऽनङ्गः प्रचोदयात् ॥ इति गायत्री ॥ नमः कामदेवाय सर्वज-
नप्रियाय सर्वजनसंमोहनाय ज्वल ज्वल प्रज्वल प्रज्वल सर्वजनस्य हृदयं
मम वशं कुरु कुरु स्वाहा । मालामन्त्रयम् ।

इति श्रीभगवन्नित्यविभभट्टारकस्य कृतौ मन्त्ररत्न-
मञ्जूषायां षष्ठः पटलः ॥ ६ ॥

---

## अथ पारिप्लवाख्यः सप्तमः पटलः ॥ ७ ॥

अथ वक्ष्ये समासेन नानामन्त्रसमुच्चयम् । पारिप्लवाख्यया सम्यक्सप्तमे पटलेऽधुना ॥ संवादाख्यस्य सूक्तस्य विधानमधुनोच्यते । तदृग्वेदे हि पठितं सर्वकामफलप्रदम् ॥ संसमिद्युवस इत्याद्यं यथा वः सुसहा सतीत्यन्तं सूक्तम् ॥ ॐ संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ । इळस्पदे समिध्यसे स नो वसून्याभर ॥ संगच्छध्वं संवदध्वं सं वो मनांसि जानताम् । देवा भागं यथापूर्वे संजानाना उपासते ॥ समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् । समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि ॥ समानी व आकूतिः समाना हृदयानि वः । समानमस्तु वो मनो यथा वः सुसहा सति ॥ अस्य संवादसूक्तस्य संवनन ऋषिः । संवादाग्निः संज्ञानाग्निर्देवता । अनुष्टुप्छन्दः । ब्रह्मणे हृदयाय । विष्णवे शिरसे । रुद्राय शिखायै । ईश्वराय कवचाय । सदाशिवाय नेत्रत्रयाय । सर्वात्मने अस्त्रायेत्यङ्गविधिः ॥

अथ ध्यानम् ॥ धवलनलिनराजचन्द्रमध्ये निषण्णं करविलसितपाशं साङ्कुशं साभयं च । सवरदममलेन्दुक्षीरगौरं त्रिनेत्रं प्रणमत सुरवन्द्यं मन्त्रु संवादयन्तम् । सहस्रकाणां दशकैश्चतुर्भिरथो सहस्रैश्च चतुर्भिरन्वितम् । जपेन्मनुं पयोधसाते (?) दशांशकं जुहुयात् धर्मादिपीठे यजेद्देवं(?) । अङ्गैः प्रथमावृतिः । अग्निमूर्तिभिर्द्वितीया । लोकपालैस्तृतीया । एवं संपूजयेद्वह्निं पश्चात्कुर्याद्यथेप्सितान्प्रयोगान् । चतुःशतं वापि दशोत्तरेण चतुश्चतुष्कं प्रजपेद्धुनेद्वा । पायसेन मधुरत्रयमाजा निमराजतरुजैः कुसुमैर्वा ॥ सर्पिषा स्तनजवृक्षसमिद्भिर्वाञ्छितार्थविषये प्रजुहोतु ॥ जुहुयात्तिलाचतुष्कैः प्रत्यूचमा-

योज्य कादिवर्गचतुष्कैः । तद्वच्च यवद्दलाद्यैर्वर्गैः संयोज्य पूर्वसंख्यकं मतिमान् । तद्वदृचं प्रतियोज्य ऋक्पादांश्च पूर्वसंख्येन जुहुयात् । ऋक्पादं च । भद्रं नो अपि वातय मनः । सर्पिःसिक्तपायसेनाचिरेण कार्यसमवाप्त्यै प्रतिपादमृक्पादं संयोज्य जुहोतु पूर्वसंख्यं प्रीतिमान् । तेनेष्टावाप्तिरचिरेण स्यात् ॥ ॥ वारुणीऋग्विधानम् ॥ भुवार्मुत्वा सुक्षिति सुक्षयन्तो व्यर्यसत्पाशं वरुणो मुमोचत । अवो वन्वाना अदितेरुपस्थाद्यूय पातस्वस्तिभिः सदा नः । वसिष्ठोऽस्यऋषिः । त्रिष्टुप्छन्दः । वरुणो देवता । अष्टमिः सप्तभिः पङ्क्तिः पुनस्तावद्भिरक्षरैः मन्त्रोत्थैः षडङ्गानि जातियुक्तैः समीरितानि । अङ्गुल्यमसधिपायुशिरसज्ञाधारनाभिकुक्षिपृष्ठहृदुरोजगलदोःसध्यमवर्भेषु च गण्डघ्राणविलोचनश्रवणयुग्ममध्ये मस्तके सर्वाङ्गेषु न्यसेद्विद्वान्मनूत्थान्वर्णान्क्रमात् ॥ ध्यानम् ॥ अच्छांशुकाभरणमाल्यविलेपनाढ्यः पाशाङ्कुशाभयवरोद्यतदोःसरोजः । शुभ्रारविन्दवसतिः सुसितः प्रसन्नो भूयाद्विभूतिविषये वरुणः श्रिये वः ॥ धर्मादिपीठे देवमर्चयेत् । अङ्गैरष्टभिरहिभिर्दिशाधिपैः समभिपूज्य वारीशम् । लक्षं मन्त्रं मन्त्री जपेत्सुनियतं सदा शुचिर्नियमात् । जुहुयात्तदर्कैरत्नैर्युतं तु घृताप्लुतैर्मतिमान् । ऋणियमृणमोचनी स्याज्जपैर्हुतैस्तर्पणैश्च मन्त्रविदः । सम्प्राप्तदुर्गतेरपि सद्यो ह्यर्थां स्थिरां लभेल्लक्ष्मीम् । इक्षोः सितस्य काण्डैर्घृतससिक्तैश्चतुःशतं जुहुयात् । सकलोपद्रवशान्त्यै तयर्णमुक्त्यै च संपदे सुचिरम् । वेतससमिद्युतहुताद्वृष्टिमकालेऽपि वितनुते वरुण. । गव्यक्षीरसमेतात्रिदिनहुतादिनमुखेषु मुदितमनाः । शतभिषजि समुदितेऽर्के चतुःशतं पायस हुनेत्सघृतम् । ऋणमोचनाय लक्ष्म्यै जनसंवननाय

शुक्रवारे वा। पाशनिबद्धं वैरिणमङ्कुशवरमोघमम्बुधेः पारे। ध्याय-न्परिक्षिपन्तं वरुणं जुहुयाच्च वा तथा प्रजपेत्। पाशनिबद्धं वैरिण-मसिना छित्वाशु नाशयन्वमनुध्यायन्। वेतससमिधो गोमूत्रलोड्विा हावयेत्तदपहत्यै। दौग्धान्नैर्भृगुवारे घृतसंसिक्तैः कृते च हवन-विधौ। ऋणमोक्षदश्च विविधोपद्रवशमकृद्रमाप्रदः प्रोक्तः। पश्चिम-संध्यासमये पश्चिमवक्त्रोऽनलं समाराध्य। ऋणमोचनममिजप्या-ष्टचतुःशतं सकलदुःखनाशाय। शालीमुद्गसंमिश्राः सरिदन्तरितं जुहोतु परसेनाम्। संस्तम्भयितुं त्रिदिनं सुमना मन्त्री चतुःशता-वृत्त्या। प्रसन्नमुखोऽथ मन्त्री प्रवर्षयेद्वा जलैः सुमुहूर्तैः। यः सोऽप्युपद्रवाणां रुंधे नियतं समृच्छति त्वरया। बहुना किमनेन मन्त्रिमुख्यो मनुनान्येव च साधयेदभीष्टम्। हवनक्रियया च तर्पणैर्वा सजपैः पाशभृतो महामहिम्नः॥ इति वारुणमन्त्रविधिः॥

॥ अथ लवणमन्त्रविधानम्॥ अथ लोणमन्त्रं वक्ष्ये सर्वसंपत्समृद्धये। सप्रागमोक्तं विधिवत्साङ्गहोमपुरःसरम्॥ ॐ चिटिचिटिचण्डा-लिमहाचण्डालि अमुकं मे वशमानयस्वाहा। चिटिमन्त्रः। लवणा-म्भसि तीक्ष्णोऽस्युमोसि हृदयं तव। लवणस्य पृथिवी माता लव-णस्य वरुणः पिता। लवणे दह्यमाने तु कुतो निद्रा कुतो रतिः। लवणं पचतिपाचयति लवणं छिन्दति भिन्दति॥ १॥ अमुकस्य दह गात्राणि दह मांसं दह त्वचम्। दह त्वगस्थिमज्जानि ह्यस्थिभ्यो मज्जिकां दह॥ २॥ यदि वसति योजनशते नदीनां वा शतान्तरे नगरे लोहप्राकारे कृष्णसर्पेशतार्गले॥ ३॥ तं दग्ध्वा नमयेच्छीघ्र-मग्ने लवणतेजसा। अत्रैव वशमायाति लोणमन्त्रपुरस्कृतम्॥ ४॥ या रात्रिशल्यविद्धस्य शूलामारोपितस्य च। या ते रात्रिर्महापाप्मिः

सा ते रात्रिर्महानिशा ॥ ५ ॥ मन्त्रोऽयमाथर्वणे प्रोक्तः । ऋग्भिरामिस्तु पञ्चाङ्गं पञ्चभिस्तु समीरितम् । अङ्गिरास्य ऋषिश्छन्दोऽनुष्टुप् तत्र च देवता । अग्नी रात्रिस्तथा दुर्गा भद्रकाली समीरिता ॥ ध्यानम् ॥ अरुणोरुणपङ्कजसंनिहितः स्रुवशक्तिवराभययुक्तकरः । अमितार्चिरज्ञान्तगतिर्विलसन्नयनत्रितयोऽवतु वो दहनः ॥ नीलतरांशुकरेशकलापा नीलतनुर्निबिडस्तनभारा । साङ्कुशपाशसशूलकपाला यामवती भवतोऽवतु नित्यम् ॥ करकमलविराजच्छङ्खचक्रासिशूला परिलसितकिरीटा पातितानेकदैत्या । त्रिनयनलसिताङ्गी तिग्मरश्मिप्रकाशा पवनसखनिभाङ्गी पातु कात्यायनी वः ॥ मुरीद्रसितदंष्ट्रिका त्रिनयनोर्ध्वकेशोल्बणा कपालपरशूल्लसड्डमरुकत्रिशूलाकुला । घनाघननिभा रणद्रुचिरकिङ्किणीमालिका भवद्विभवसिद्धये भवतु भद्रकाली चिरम् ॥ अयुतं नियतो मन्त्रमृक्पञ्चकसमन्वितम् । प्रजपेत्त्रिसहस्रं वा सम्यग्गेनं समाहितः ॥ दशांशेन हुनेत्सिद्ध्यै हविषा घृतसंयुजा । एवं कृते प्रयोगार्हो मन्त्री भूयान्न चान्यथा । वह्निरात्री उभे स्यातां वश्याकर्षणकर्मणोः । दुर्गाकाल्यो तथा देव्यौ शस्ते मारणकर्मणि । आरभ्य चर्मवृन्मन्त्री तृतीयां कृष्णपक्षजाम् । स दीक्षितो भवेत्पूतो मन्दिरे मन्त्रजापवान् । निखन्यात्तत्र कुण्डं च दोर्मात्रं त्र्यस्रमेखलम् । चतुष्कं सुन्दराकार पुत्तलीनां च कारयेत् । एकां साध्यर्क्षवृक्षेण शालिपिष्टेन चापराम् । चक्राकारमृदा चान्यां मधूच्छिष्टेन चापराम् । तासु हृद्देशलिखितां साध्याख्यां सुसमाहितः । सम्यक्कसंस्थाप्येत्प्राणान्साध्यादानीय साधकः । उत्तानां दारुजां कुण्डे खनेन्मन्त्राभिमन्त्रिताम् । पिष्टजां विष्टरस्याधः पादस्थाने च मृन्मयीम् । लम्बयेदम्बरे सिक्थमयीमूर्ध्वमधोमुखीम् । पुनः कृष्णा-

ष्टमीरात्रौ पूर्वयामे गते सति । रक्तमाल्याम्बरो मन्त्री कृतरक्तानुलेपनः । सम्यक्कृतलिपिन्यासः प्राणायामादिकृच्छुचिः । कुडवं पोतलवणं सुश्लक्ष्णपरिचूर्णितम् । दधिक्षौद्रघृतक्षीरैः प्रोक्षयित्वा सुशोधितम् । आलोड्य गुडमध्वाद्यैर्विस्पष्टावयवामथ । तेन पुत्तलिकां मन्त्री धार्यङ्गीं कारयेत्ततः । तस्यां च स्थापयेत्प्राणान्गुर्वादेशविधानतः । अष्टोर्ध्वशतसंख्यं वा तथाष्टोर्ध्वसहस्रकम् । मन्त्रमध्यकं पञ्चविंशत्संख्यं प्रतिकृतिं स्पृशन् । जपित्वाङ्गानि विन्यस्येत्स्वाङ्गे प्रतिकृतावपि । सतारैस्त्रिटिमर्णैश्चतुर्विंशतिसंख्यकैः । शिरोललाटदृक्कर्णनासास्यचिबुकेष्वपि । सकण्ठहृदयोरोजकुक्षिनाभिकटीषु च । मेंढ्रपायूपस्थजानुजङ्घाचाङ्घ्रिषु विन्यसेत् । अधोगुह्यादिभेदः स्यादूर्ध्वं भेदो द्विके सति । आरम्यैवं प्रविन्यस्य पुनः प्रतिकृतावपि । अङ्घ्रप्रसंधिप्रपदजङ्घाजानूरुपायुषु । सलिङ्गनाभिजठरहृद्येषु स्तनद्वये । कन्धराचिबुकास्येषु घ्राणदृक्कर्णयुग्मके । ललाटशिरसो न्यसेत्प्रतिमायां च संहरन् । उपलिप्तेऽथ कुण्डेऽन्तर्बहिर्गोमयवारिणा । साध्यसंमुखमासीन आदध्याद्धव्यवाहनम् । प्रज्वाल्य साध्योऽङ्कुशकाष्ठैरभ्यर्च्य दिक्क्रमात् । राजीवसितपुष्पाद्भिस्पके राजतादिके । देवतांप्रति पाद्यार्घ्यं दत्त्वा कार्यार्थसिद्धये । उपतिष्ठेच्च कर्मोद्यमन्ते वक्ष्यमाणमन्त्रैः ॥ त्वमाननं निर्जराणां विशया हव्यवाहन । हविषा मन्त्रदत्तेन तृप्तो भव तया सह ॥ जातवेदो महादेव तप्तजाम्बूनदप्रभ । स्वाहापते विश्वभक्ष लवणं दह शत्रुहन् । ईशे शर्वरि शर्वाणि ग्रस्तमुक्तं च या जगत् ॥ महादेवि नमस्तुभ्यं वरदे कामदा भव । तमोमयि महादेवि महादेवस्य सुमते । त्रियामे पुरुषं हत्वा ममामानय देवि मे ॥ दुर्गे सर्गादिरहिते दुर्गसंरोधनार्गले । चक्रशङ्खधरे

देवि दुष्टशत्रुभयंकरि ॥ नमस्ते दह शत्रुं मे वशमानय चण्डिके । शाकंभरि महादेवि शरणं मे भवानघे ॥ भद्रकालि भवाभीष्टमन्त्र-सिद्धिप्रदायिनी । सपत्नान्मे हन हन दह शोषय पातय । शूलासि-शक्तिशस्त्रैरुत्कृत्योत्कृत्य भावय ॥ महादेवि महाकालि रक्षास्मान-क्षरात्मिके । पुनः प्रतिकृतेरङ्गसप्तकं ना शितायसा ॥ दक्षपादादिकं छित्त्वा पश्चाच्चे प्रजपन्मनुम् । साध्यं संस्मृत्य शितधीर्जुहुयात्सप्तसं-ख्यया ॥ दक्षिणं चरणं पूर्वं तयोर्दक्षार्धकं पुनः । दक्षहस्तं तृतीयं स्याद्गलादूर्ध्वं चतुर्थकम् ॥ पञ्चमं वामहस्तं स्यात्षष्ठं वामार्धमेव च । सप्तमं वामपादं स्यादन्यापि स्याद्धुतक्रिया ॥ सप्तसप्तविभागो वा क्रमादङ्गेषु सप्तसु । एकादशादिभिर्भेदैर्वा तदङ्गैः सप्तभिर्हुनेत् ॥ होमो-ऽन्यथा वा पूर्वं तु दक्षिणश्चरणो भवेत् । द्वितीयं दक्षिणकरस्तृतीयं शिर उच्यते ॥ वामबाहुश्चतुर्थस्तु मध्यादूर्ध्वं तु पञ्चमम् । अधोभा-गस्तु षष्ठः स्याद्वामपादस्तु सप्तमम् ॥ हुत्वैवं पूर्वसंप्रोक्तैरुपस्थाय च मन्त्रकैः । अर्चयित्वा दण्डदीर्घं प्रणमेद्धव्यवाहनम् ॥ सुवर्णयुक्तां गां चात्र शोणां दद्यात्सतर्णकाम् । दक्षिणां सप्तकर्षं तु दद्याज्जारणकर्मणि ॥ अंशुकं रुचकं धान्यं दत्वा संप्रीणयेद्गुरुम् । एवं कृते च मन्त्रीष्टं लभते होमकर्मणि ॥ अथ चेन्मारणाकाङ्क्षी साध्यवामाङ्घ्रिपांसुभिः । सनिम्बतिलसिद्धार्थव्रणकृत्तैलसंयुतैः ॥ एतैर्विमिश्रयित्वा तु लोणं पूर्वोक्तसंख्यया । हिङ्गुत्रिकटुकोपेतैर्महिषीमूत्रपेषितैः । खराद्धपाराश-सयोः पुरीषेण समन्वितैः । पूर्ववत्पुत्तलीं तेन लोणचूर्णेन कारयेत् ॥ प्राणान्प्रतिष्ठापयेच्च तत्र पूर्वोक्तसंख्यया । पूर्वोक्ताभिः पुत्तलीभिः कुण्डे दक्षिणदिङ्मुखः ॥ दुर्गां वा भद्रकालीं वा प्रतिपाद्य यथेरितम् । उपतिष्ठेदर्धरात्रे सव्यपाणिधृतस्रुवः ॥ वामपादं समारभ्य जुहुया-

त्पूर्वसंख्यया । समापयेद्दक्षपादे विकारेणापरो वशी ।। त्रिसप्ताहप्रयो-
गेण मारयेद्रिपुमात्मनः । तस्यां रात्रावुपोष्याथ परेऽहनि तु साधकः ।।
प्राणायामादिभिरपि गायत्रीजपहोमकैः । विमुक्तपातको भूत्वा स
पुनर्विहरेत्सुखम् ।। अथवा लवणैः परागभूतैर्मधुराक्तैः पुनरष्टमीनि-
शायाम् । जुहुयात्तु चतुर्दशीनिशान्तं कुडवोन्मानितमेभिरेव मन्त्रैः ।।
नारीं नरान्वा नगरीं नृपान्वा ग्रामं द्विजान्वा मनसोऽनुकूलान् ।
वशीकरोत्येव हुतक्रियेयं चिराय नैवात्र विचारणीयम् ।। इति लव-
णमनोर्विधानमेवं प्रणिगदितं विविधप्रभेदभिन्नम् । विधिवन्मधुसाधु
संप्रयुञ्जन्व्रजति फलं निजवाञ्छितं चिराय ।। इति लवणमनुवि-
धानम् ।। ।। बृहस्पतिमनुविधानम् ।। ब्रूंबृहस्पतये नमः । वसु-
साहस्रोऽस्य जपस्तावद्धुतहुतो मतः । होमः सर्पिष्मतान्नेन बीजे-
नाङ्गक्रिया मता ।। ध्यानम् ।। रत्नस्वर्णाशुकादीन्निजकरकमलाद्द-
क्षिणादाकिरन्तं वासोराशौ निधायापरममरगुरुं पीतवस्त्रादिभूषम् ।
ध्यायन्नासीनमप्यापणभुवि शतसंख्यं सविंशत्कमेवं जप्त्वा पुष्पैर्घृ-
ताक्तैस्त्रिदिनमथ जुहुयात्स्वर्णवस्त्रादिसिद्ध्यै ।। ।। शुक्रमनुविधा-
नम् ।। वयोरन्तरालं मे देहि शुक्राक्षराद्विठः । दशाक्षरो मन्त्रः ।।
अयुतजपः । सर्पिःसहस्रहवनक्रियः ।। ध्यानम् ।। शुक्रास्ये शुक्र-
पुष्पैर्हुतभुजि गुणशः सप्तशोऽप्येकविंशद्वारं होतव्यमेषोऽप्यतिसित-
कुसुमालेपनो वामदोष्णा । वासोरत्नादिकान्तेस्त्वरमपि सततं साध-
काय प्रयच्छन् ध्यातो व्याख्यानमुद्राकलितवरकरः स्थापणालिन्द-
संस्थः ।। ।। वेदव्यासमनुविधानम् ।। व्यांवेदव्यासाय नमः ।।
ध्यानम् ।। मुनिमाषाढवीतं मुदितधियमम्भोजरुचिरद्युतिं व्याख्या-
मुद्राकलनविलसद्दक्षिणकरम् । परं जानौ कृत्वा दृढकलितकक्षैक-

देवि दुष्टशत्रुभयंकरि ॥ नमस्ते दह शत्रुं मे वशमानय चण्डिके । शाकंभरि महादेवि शरणं मे भवानघे ॥ भद्रकालि भवामीष्टमन्त्र-सिद्धिप्रदायिनी । सपत्नान्मे हन हन दह शोषय पातय । शूलासि-शक्तिचक्राद्यैरुत्क्रम्योत्क्रम्य भावय ॥ महादेवि महाकालि रक्षाशान-क्षरात्मिके । पुनः प्रतिकृतेरङ्गमस्तकं ना शितायसा ॥ दक्षपादादिकं छित्त्वा पञ्चर्च प्रजपन्मनुम् । साध्यं संस्मृत्य शितधीर्जुहुयात्सप्तसं-ख्यया ॥ दक्षिणं चरणं पूर्वं वनोर्दक्षार्धकं पुनः । दक्षहस्तं तृतीयं स्याद्गलादूर्ध्वं चतुर्थकम् ॥ पञ्चमं वामहस्तं स्यात्षष्ठं वामार्धमेव च । सप्तमं वामपादं स्यादन्यापि स्याद्धुतक्रिया ॥ सप्तसप्तविभागो वा क्रमादङ्गेषु सप्तसु । एकादशादिभिर्भिन्नैर्वा वदङ्गैः सप्तभिर्हुनेत् ॥ होमो-ऽन्यथा वा पूर्वं तु दक्षिणश्चरणो भवेत् । द्वितीयं दक्षिणकरस्तृतीयं शिर उच्यते ॥ वामबाहुश्चतुर्थस्तु मध्यादूर्ध्वं तु पञ्चमम् । अधोभा-गस्तु षष्ठः स्याद्वामपादस्तु सप्तमम् ॥ हुत्वैवं पूर्वसंप्रोक्तैरुपस्थाय च मन्त्रकैः । अर्चयित्वा दण्डदीर्घं प्रणमेद्धव्यवाहनम् ॥ सुवर्णयुक्तां गां चात्र शोणां दद्यात्सतर्णकाम् । दक्षिणां सप्तरूपं तु दद्याज्जारणकर्मणि ॥ अंशुकं रुचकं धान्यं दत्वा संप्रीणयेद्गुरुम् । एवं कृते च मन्त्रीष्टं लभते होमकर्मणि ॥ अथ चेन्मारणाकाङ्क्षी साध्यवामाङ्घ्रिपांसुभिः । सनिम्बतिलसिद्धार्थत्रणकृत्तैलसंयुतैः ॥ एतैर्विमिश्रयित्वा तु लोणं पूर्वोक्तसंख्यया । हिङ्गुत्रिकटुकोपेतैर्महिषीमूत्रपेषितैः । वराहपाराव-तयोः पुरीषेण समन्वितैः । पूर्ववत्पुत्तलीं तेन लोणचूर्णेन कारयेत् ॥ प्राणान्प्रतिष्ठापयेच्च तत्र पूर्वोक्तसंख्यया । पूर्वोक्ताभिः पुत्तलीभिः कुण्डे दक्षिणदिङ्मुखः ॥ दुर्गां वा भद्रकालीं वा प्रतिपाद्य यथेरितम् । उपतिष्ठेदर्धरात्रे सव्यपाणिस्थशस्त्रकः ॥ वामपादं समारभ्य जुहुया-

संपूर्णसंख्यया । समापयेद्दक्षपादे विकारेणापरो वशी ॥ त्रिसप्ताहप्रयोगेण मारयेद्रिपुमात्मनः । तस्यां रात्रावुपोष्याथ परेऽहनि तु साधकः ॥ प्राणायामादिभिरपि गायत्रीजपहोमकैः । विमुक्तपातको भूत्वा स पुनर्विहरेत्सुखम् ॥ अथवा लवणैः परागमूतैर्मधुराक्तैः पुनरष्टमीनिशायाम् । जुहुयात्तु चतुर्दशीनिशान्तं कुण्डयोन्यामितमेभिरेव मन्त्रैः ॥ नारीं नरान्वा नगरीं नृपान्वा ग्रामं द्विजान्वा मनसोऽनुकूलान् । वशीकरोत्येव हुतक्रियेयं चिराय नैवात्र विचारणीयम् ॥ इति लवणमनोर्विधानमेवं प्रणिगदितं विविधप्रभेदभिन्नम् । विधिवन्मधुसाधु संप्रयुञ्जन्व्रजति फलं निजवाञ्छितं चिराय ॥ इति लवणमनुविधानम् ॥ ॥ बृहस्पतिमनुविधानम् ॥ बृंबृहस्पतये नमः । वसुसाहस्रोऽस्य जपस्तावद्धूतहुतो मतः । होमः सर्पिर्मवाभेन बीजेनाङ्गक्रिया मता ॥ ध्यानम् ॥ रत्नस्वर्णांशुकादीन्निजकरकमलाद्दक्षिणाद्वाकिरन्तं वासोराशौ निधायापरममरगुरुं पीतवस्त्रादिभूषम् । ध्यायन्नासीनमभ्यापणभुवि शतसंख्यं सविंशत्कमेवं जप्त्वा पुष्पैर्घृताक्तैस्त्रिदिनमथ हुनेत्स्वर्णवस्त्रादिसिद्ध्यै ॥ ॥ शुक्रमनुविधानम् ॥ ववयोरन्तरान्नं मे देहि शुक्राक्षराद्वितः । दशाक्षरो मन्त्रः ॥ अयुतजपः । सर्पिःसहस्रहवनक्रियः ॥ ध्यानम् ॥ शुक्रास्ये शुक्लपुष्पैर्हुतभुजि गुणशः सप्तशोऽप्येकविंशद्वारं होतव्यमेषोऽप्यतिसितकुसुमालेपनो वामदोष्णा । वासोरत्नादिकार्थेस्वरमपि सततं साधकाय प्रयच्छन् ध्यातो व्याख्यानमुद्राकलितवरकरः स्थापणालिन्दसंस्थः ॥ ॥ वेदव्यासमनुविधानम् ॥ व्यांवेदव्यासाय नमः ॥ ध्यानम् ॥ मुनिव्राताबीतं मुदितधियमम्भोजरुचिरद्युतिं व्याख्यामुद्राकलनविलसद्दक्षिणकरम् । परं जानौ कृत्वा दृढकलितकक्षैक-

विवरं समासीनं व्यासं स्मरति निवरां पुण्यचरितम् ॥ प्रकृतिसहस्रं जप्याद्दशांशकृतपायसाज्यहवनविधिः । निरुपमकविताप्रज्ञाख्यारख्या-श्रीसंपदावहो मन्त्रः ॥ ॥ संकोचमन्त्रविधानम् ॥ करचरणमूलपार्श्वयुग्मोहरे विन्दुहुंसरसनार्णः । अलिकायात्वमोक्षे द्विठान्तिको मनुरयं भृग्वादिः स्यात् ॥ ॐ अकचटतपयशें ह्रीं हुंसः हुंफट्स्वाहा । अयुतं प्रजपेन्मनुं सहस्राधिकमन्ते जुहुयाद्दशांशमानम् । तिलसर्षपतन्दुलैः सशालीहविराज्यैश्च समेधिते कृशानौ ॥ ध्यानम् ॥ उर्ज्ञाद्रिः प्रचेता अपि दहनसमीरौ धराव्योमसंज्ञौ प्राक्प्रत्यक्सौम्यदिक्षु स्वध उपरि च दिक्षु प्रबद्धप्रभाः स्युः । तन्मध्यस्थान्विपक्षादिकहरिरुरुदन्तीन्द्रनागान्सचौरान्हन्यात्तैर्मन्त्रिमुख्यो मनुविहितबलव्याकुलान्सधव ॥ निजपरिमलिकायैस्तैः ससंवाधवीतं मनुविदथ हलोभ्यां रुद्धनिश्वासवेगम् । उपरि च गतबीजैः साधुसंस्यूतवक्त्रं दहतु सकवचास्त्रहींदुभिः स्वेच्छयैव ॥ इति संकोचमन्त्रः ॥ अथ प्राणप्रतिष्ठा ॥ आं ह्रीं क्रों अमुष्य प्राणा इह प्राणाः । अमुष्य जीव इह स्थितः । अमुष्य सर्वेन्द्रियाणि । अमुष्य वाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा । प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुरुद्रा ऋषयः । ऋग्यजुःसामानि छन्दांसि । क्रियामयवपुः प्राणाख्या परादेवता प्राणप्रतिष्ठायां विनियोगः । लक्षमेकं जपेत्सुदीक्षितः । तद्दशांशं रक्तकुसुमैर्हुनेदाज्येन वा चरुणा वा मिश्रकैर्वा । ॐ कखगघङ अं पृथिव्यप्तेजोवाय्वाकाशात्मने आं हृदयाय नमः । ॐ चछजझञ इं शब्दस्पर्शरूपरसगन्धात्मने ईं शिरसे स्वाहा । ॐ टठडढण उं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं शिखायै वषट् । ॐ तथदधन एं वाक्पाणिपादपायूपस्थात्मने ऐं कवचाय हुं । ॐ पफबभम ओं वचनादानवि-

सर्वानन्दात्मने औं नेत्रत्रयाय वौषट्। ॐ यरलवशषसहळक्ष अं मनोबुद्ध्यहंकारचित्तात्मने अः अस्त्राय फट्। इत्यादिप्रकारेणाङ्गन्यासः। ॐ आं नाभेरधः। ॐ ह्रीं हृदयादानाभि। ॐ क्रों मस्तकाद्याहृदयं न्यस्य। ॐ यं त्वगात्मने नमः। ॐ रं असृगात्मने नमः। ॐ लं मांसात्मने नमः। ॐ वं मेदआत्मने नमः। ॐ शं अस्थ्यात्मने नमः। ॐ षं मज्जात्मने नमः। ॐ सं शुक्रात्मने नमः। ॐ हं प्राणात्मने नमः। ॐ क्षः जीवात्मने नमः। इत्यादिप्रकारेण हृदयस्थान एव विन्यस्य मूलमन्त्रं मस्तकादिचरणपर्यन्तं व्यापकं न्यस्य अनन्तरं हृदयपद्ममध्ये देवीं ध्यायेत्॥ रक्ताम्भोधिस्थपोतो- ल्लसदरुणसरोजाधिरूढा कराब्जैः पाशं कोदण्डमिक्षूद्भवमथ गुणम- प्यङ्कुशं पञ्चबाणान्। बिभ्राणाऽसृक्कपाले त्रिनयनलसिता पीनवक्षो- रुहाढ्या देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः॥ एवं ध्यायन् शक्तिपीठे देवीं पूजयेत्। कथम्। कर्णिकाग्नेयपट्कोणे कोणमध्ये ब्रह्मा वाण्या सह हरिर्लक्ष्म्या रुद्रः पार्वत्या षट्कोणेषु संपूज्य पश्चादङ्गैः ततो मातृभिर्लोकेशैश्च। एवं सुगन्धिकुसुमैः पूजयेद्देवीम्। वायव्यदले यं अमृतायै नमः। आग्नेयदले रं वैवस्वताय नमः। ऐन्द्रे लं जीवायै। पश्चिमे वं प्राणदायै। ईशानदले शं आह्लादायै। नैर्ऋतिदले षं प्रसन्नायै। उत्तरदले सं प्रमदायै। याम्ये हं विस्फुलि- ङ्गिन्यै। मध्ये हंसः क्षः क्षेत्रप्रतिहर्त्र्यै नम इति पूजयेत् ध्यानेऽपि। प्रयोगसमये यादिबीजानि दूतीश्च रक्तवर्णा वश्याकर्षणादिषु यं रं इत्यादिस्वीयबिन्दुतन्तुसम्बद्धान् निजश्वासमार्गनिर्गतान् स्वीयहृत्प- द्मात् भृङ्गीरूपान् साध्यप्राणान्भृङ्गरूपान्। अथवा स्वीयप्राणान् भुजगाकारान् साध्यप्राणान् मण्डूकाकारान् ध्यात्वा॥ ध्यानम्॥

सुप्तारोपजने निशीथसमये साध्ये सचित्रादरात् आरुह्यैव वशं निधाय हृदये साध्याकृतेः कीटकम्। बद्ध्वा तं च विपीठमेव सहसा कालस्य चेष्टा शिरस्याघातप्रमिताखिलेन्द्रियगणं साध्यं स्मरेत्साधकः॥ गत्वा बध्वा पाशबीजेन साध्यं शक्त्या गृह्णन् शक्तिबीजेन भूयः। प्राणानाकृष्याङ्कुशेनाथ यादीन् दूतीश्रोक्त्या साध्यनामाथ धातून्॥ एवं साध्यदेहादाकृष्य प्राणान्पुत्तल्यादिदेहे संस्थापयेत्। कथम्। पाशादिबीजोच्चारणानन्तरं यादीन्हंसपर्यन्तानुच्चार्य अमुष्य प्राणा इह प्राणाः। पुनरपि पूर्वबीजान्युच्चार्य अमुष्य जीव इह स्थितः। पुनरपि तथैवोच्चार्य अमुष्य सर्वेन्द्रियाणि। पुनरपि तथैवोच्चार्य वाङ्मनश्चक्षुरित्याद्युच्चारयेत्। एवंप्रकारेण कार्यानुगुणतया अष्टोत्तरसहस्रं तदुत्तरशतं वा तदुत्तरविंशतिर्वा एकादशवारं वा उच्चार्य वश्याकर्षणादौ स्वकीयहृत्पद्मे संस्थापयेत्। पुत्तल्यादौ चाभिचारेऽपि। इति प्राणप्रतिष्ठा संक्षेपेण निरूपिता। प्राणानयनादौ नास्त्यनया समो मन्त्रः॥ ॥ अथ कुक्कुटमन्त्रविधानम्॥ श्रीकुक्कुटमन्त्रस्य। गुरव एव ऋषयः। अनुष्टुप् छन्दः। कुक्कुटो देवता। धूं हृदयाय। कोलि शिरसे। यूं शिखायै। कोलि कवचाय। वां नेत्रत्रयाय। स्रोपमस्त्रम्। एवमङ्गविधिः॥ ध्यानम्॥ मचोदधिमध्यगते द्वीपवरे कनकरत्नमयभूमौ॥ नवशीकरमुक्तामृदुपवनेन सुशीतले मनोरम्ये॥ तत्र समुत्थितममलं विपुलतरं कनकरत्नफलजातम्। हैमं तालमहीनं बहुमणिविलसद्विचित्रपत्रवरम्॥ तं पुनरधिष्ठितं ध्यायेदधिकोज्वलाङ्गमतिशोणम्। चूडाशोभितवक्त्रं कुक्कुटमतितीक्ष्णनखरचरणयुगम्॥ वक्त्रं यस्य षडाननो गिरिसुता यस्योदरं कालहा पृष्ठं यस्य तु शास्तृकुञ्जरमुखौ पादौ च सव्येतरौ।

पक्षौ यस्य सुरद्रुमौ परिणतौ यः शृङ्खजावन्धुरालाकर्पेन्वशिनः करोतु स पुनः सर्वानसौ कुक्कुटः ॥ गौरीहस्तारविन्दे स्वनिशमधिवसन्पणुरास्लक्ष्मायः सर्वालंकारदीप्तः प्रचलितचरणः पक्षविक्षेपदक्षः । हेमाभो रत्नचञ्चुर्मणिमयविलसच्चित्रकण्ठस्वरूपः मायाद्रक्ताग्रचूडः सकलजननतः सर्वसिद्धिप्रदाता ॥ अमुष्य पूर्वं सेवार्थमेकलिङ्गे शिवालये । देवस्य महतीं पूजां कृत्वासीत स्वदङ्कुरः । ध्यात्वा कुक्कुटदेवं मं जपेन्मातुसहस्रकम् । यावच्छवं तर्पयित्वा पुरश्चर्या कृता भवेत् । तालपत्रे मन्त्रं विदर्भं साध्याक्षरैः प्राणान्प्रतिष्ठाप्य शतं तथाष्टौ जप्त्वा घृते चेत्स्यवशं प्रयाति । ताम्बूलं यद्यष्टसहस्रं जप्त्वा यस्मै ददात्यसौ स्याद्वश्या नितं प्रेष्यवत् । एषा दास्यत्वर्थं प्रार्थितभोगा ॥ मधजातमथ पञ्चमलं यत्कनकाढ्यमथ पञ्चकयुक्तम् । भक्ष्यभोज्यविधिषु प्रतियुञ्ज्यात्साध्य वशं याति चामरणान्तम् । भूर्जे साध्यविदर्भितं मनुमिमं संलिख्य कौलालिकीमृत्स्नाकल्पितपुत्तलीहृदि कृतप्राणान्प्रतिष्ठाप्य तत् । जप्ता सप्तदिनं त्रिसंध्यमथ तामालोड्य शृङ्गीरसे क्षिपेद्वश्यमवश्यमेव भविता जन्मस्वनेकेष्वपि ॥ आत्मानं कुक्कुटं ध्यात्वा स्वकीयगलसत्प्रभा । साध्यं शृङ्खलया कण्ठे बध्वाऽऽकर्षमनुं जपेत् । सहस्रमर्धरात्रे तु रात्रित्रयमतन्द्रितः । तुरीये कुक्कुटायान्ते साध्यनाम च कर्म च । जपे संयोज्य मद्यादिकास्येषु सकलेष्वपि । यामावधि जपेदेनं योषिदेषा मदालसा । श्वसत्स्वेदार्द्रवदना मदाकुलितचेतना । स्खलितमध्यजघना पिच्छितांशुकभूषणा । स्खलत्पादप्रविन्यासा स्फुरद्रोमाञ्चकञ्चुका । मदनानलोष्णनिश्वासशोषिताधरपल्लवा । विकीर्णकेशपाशा सा प्रेरिता घूर्णितेक्षणा । रचिताञ्जलिरायाति स्वयंमस्यालयं निशि । नाभिमात्रे जले स्थित्वा

सुप्ताद्योपजने निशीथसमये साध्ये स्वपित्यादरात् आरुह्येन वशां निधाय हृदये साध्याङ्गनेः षीटकम्। यद्वा तं च विपीडमेव सहसा कालस्य चेष्टा शिरस्याघातमुनिवारितेन्द्रियगण साध्य स्वरेत्सा-धकः ॥ गत्वा यत्त्वा पाशबीजेन साध्यं भक्त्या गृह्णन् शक्तिबीजेन भूयः। प्राणानाद्याङ्कुशेनाथ यादीन् तृतीयोक्त्या साध्यनामाय धातून् ॥ एवं साध्यदेहादाकृष्य प्राणान्पुत्तल्यादिदेहे संस्थापयेत्। कथम्। पाशादिबीजोच्चारणानन्तरं यादीन्हसपर्यन्तानुच्चार्य अमुष्य प्राणा इह प्राणाः। पुनरपि पूर्वबीजान्युच्चार्य अमुष्य जीव इह स्थितः। पुनरपि तथैवोच्चार्य अमुष्य सर्वेन्द्रियाणि। पुनरपि तथै-वोच्चार्य वाङ्मनश्चक्षुरित्याद्युच्चारयेत्। एवंप्रकारेण कार्यानुगुणतया अष्टोत्तरसहस्र तदुत्तरशत वा तदुत्तरविंशतिर्वा एकादशवार वा उच्चार्य वश्याकर्षणादौ स्वकीयहृत्पद्मे संस्थापयेत्। पुत्तल्यादौ चाभिचारेऽपि। इति प्राणप्रतिष्ठा सङ्क्षेपेण निरूपिता। प्राणानयनादौ नास्त्यनया समो मन्त्रः ॥ ॥ अथ कुकुटमन्त्रविधानम् ॥ श्रीकु-क्कुटमन्त्रस्य। गुरव एव ऋषय। अनुष्टुप् छन्दः। कुक्कुटो देवता। यूं हृदयाय। कोलि शिरसे। यूं शिखायै। कोलि कवचाय। वां नेत्रत्रयाय। शेषमस्त्रम्। एवमङ्गविधिः ॥ ध्यानम् ॥ मधोद-धिमध्यगते द्वीपवरे कनकरत्नमयभूमौ ॥ नवशीकरमुक्तामृदुपवनेन सुशीतले मनोरम्ये ॥ तत्र समुत्थितममलं विपुलतरं कनकरत्नफ-लजातम्। हैमं तालमहीनं बहुमणिविलसद्विचित्रपत्रवरम् ॥ त पुनरधिष्ठित द्राग्ध्यायेदधिकोज्ज्वलाङ्गमतिशोणम्। चूडाशोभितवक्त्रं कुकुटमतितीक्ष्णनखरचरणयुगम् ॥ वक्त्रं यस्य षडाननो गिरिसुता यस्योदरं कालहा पृष्ठं यस्य हरिः शास्तकुञ्जरमुखौ पादौ च सव्येतरौ।

पक्षौ यस्य सुरद्रुमौ परिणतौ यः शृङ्खलाचन्द्रुरानाकर्षन्वशिनः करोतु स पुनः सचोनसौ कुक्कुटः ॥ गौरीहृत्सारविन्दे स्वनिशमधिवसन्पण्मुखारूढकायः सर्वालंकारदीप्तः प्रचलितचरणः पक्षविक्षेपदक्षः । हेमाभो रत्नचञ्चुर्मणिमयविलसच्चित्रकण्ठस्वरूपः पायाद्रक्ताग्रचूडः सकलजननतः सर्वसिद्धिप्रदाता ॥ अमुष्य पूर्वं सेवार्थमेकलिङ्गे शिवालये । देवस्य महतीं पूजां कृत्वासीत उदङ्मुखः । ध्यात्वा कुक्कुटदेवं तं जपेन्मानुसहस्रकम् । तावच्छतं तर्पयित्वा पुरश्चर्या कृता भवेत् । तालपत्रे मन्त्रं विदर्भ्यं साध्याक्षरैः प्राणान्प्रतिष्ठाप्य शतं तथाष्टौ जप्त्वा घृतं चेत्स्ववशं प्रयाति । ताम्बूलं यदष्टसहस्रं जप्त्वा यस्मै दत्तमसौ स्यात्स्वया नित्यं प्रेष्यवत् । यथा दासस्त्वर्थं प्रार्थितभोगा ॥ मन्त्रजप्तमथ पञ्चमलं यत्कनकाह्वयमथ पञ्चकयुक्तम् । भक्ष्यभोज्यविधिषु प्रतियुञ्ज्यात्तस्य वशं याति चामरणान्तम् । भूर्जे साध्यविदर्भितं मनुमिमं संलिख्य कौलालिकीमृत्स्नाकल्पितपुत्तलीहृदि कृतप्राणान्प्रतिष्ठाप्य तत् । जप्त्वा सप्तदिनं त्रिसंध्यमथ तामालोड्य भृङ्गीरसे लिपेद्वश्यमवश्यमेव भविता जन्मस्थलेऽप्यपि ॥ आत्मानं कुक्कुटं ध्यात्वा स्वकीयगलसक्तया । साध्यं शृङ्खलया कण्ठे पध्वाऽऽकर्षमनुं जपेत् । सहस्रमर्धरात्रे तु रात्रित्रयमतन्द्रितः । तुरीये कुक्कुटायान्ते साध्यनाम च कर्म च । जपे संयोज्य मन्त्रादिकान्येषु सकलेष्वपि । यामावधि जपेदेनं योषिदेषा मदालसा । उद्यत्स्वेदार्द्रवदना मदाकुलितचेतना । चलत्स्विन्नमध्यजघना पिच्छिलांशुकभूषणा । स्खलत्पादप्रविन्यासा स्फुरद्रोमाञ्चकञ्चुका । मदनानललोष्णनिश्वासशोषिताधरपल्लवा । विकीर्णकेशपाशा सा प्रेरिता घूर्णितेक्षणा । रचिताञ्जलिरायाति स्वयमस्यालयं निशि । नाभिमात्रे जले स्थित्वा

स्पर्शान्निगडं दृढमद्भुतम् ॥ शिखिकुक्कुटयोः पादौ सप्ताहं पूरितोद्धतौ श्मशाने जायते द्वैधं निगडं लेपतोऽनयोः ॥ हस्तार्के सिन्दुवारस्य मूलमुत्तरमुद्धृतम् । स्पर्शतो बन्धविच्छेदं कुरुते शीघ्रमद्भुतम् ॥ ॐ नमो वाचाटाय तद्यथा हिडिहिडिद्राविडिद्राविडिस्वाहा । अनेन मन्त्रेण पुष्पं फलं वा सहस्रमन्त्रितं नरनारीभ्यां दत्तं वश्यकृन्मतम् ॥ ॐ अरुणं हुं फट्स्वाहा । अनेन सप्ताभिमन्त्रितेन जलेन क्षालिते शाम्यति क्षिप्रमक्षिपीडातिदुःसहा ॥ उच्छिष्टो मृदमादाय नदीतीरद्वयान्तरा । रूपं तालस्थितं कृत्वा तद्धृदि साध्यनामसहितं मन्त्रं विन्यस्य पत्रं भूर्जे लिखितं वामनासिकासधत्तूररसेन पूरितं मन्त्रं त्रिःसप्तप्रजप्तं त्रिदिनं चेद्वशयेदुर्वशीमपि । मन्त्रः । ॐ उच्छिष्टचामुण्डे भञ्जय भञ्जय मोहय अमुकीं मे वशमानय स्वाहा । ॐ चिंचिणिपिशाचिनि स्वाहा । एतं मन्त्रं एकविंशतिदिवसं जप्त्वा प्रतिदिवसं सप्तविंशतिसंख्यया समुच्छिष्टेन नैवेद्यं देयं मलिसहितपोलिकाः । तत आचमनं कार्यं न मध्ये । यदि कदाचिद्विस्मृत्याचमनं करोति तदा निष्फलं भवति । अतः पुनरारम्भः कार्यः । ततः पिशाचिनी भवेत्तुष्टा कर्मान्ते पूजने कृते । सप्तविंशतिदीनारान्प्रत्यहं सा प्रयच्छति ॥

इति श्रीभगवतस्त्रिविक्रमभट्टारकस्य कृतौ मन्त्ररत्नमञ्जूषायां पारिप्लवाख्यकौतुकः सप्तमः पटलः ॥

---

## अथाष्टमो यन्त्रपटलः ।

अथ वक्ष्ये संग्रहतो यन्त्राणि सकलकार्यसिद्धिदानि ॥ अष्टदलं पद्मं तत्कर्णिकायां हसौः एतल्लिखेत् । केसरेषु स्वरद्वन्द्वं पत्रेषु कचटतपयशलक्षवर्णगणान् दिक्षु वकारं कोणेषु ठकारयुक्तं क्षोणीपुरं

बहिः । एतद्विपगदमर्त्यंसिमृत्युंजयं यन्त्रम् ॥ त्रिकोणं लिखित्वा तन्मध्ये शक्तिं गर्भे साध्यनामकर्मसहितां लिखेत् । शक्तिभिर्वृतं त्रिकोणमध्ये ई हरिहरवर्णैः कपोलयोः तैरीयुतैः वेष्टितं मातृकावीतं भूपुरमध्यगतं त्रिगुणितं यन्त्रमिष्टार्थदं ॥ आलिख्याष्टदिगर्गलान्युदरगं पाशादिकं त्र्यक्षरं कोष्टेष्वङ्गमनूत्परेषु विलिखेदष्टार्णमन्त्रद्वयम् । अचपूर्वापरपट्टयुगलयवराग्योमासनानर्गलेष्वालिख्येन्द्रजलाधिपादिगुणशः पङ्क्तिद्वयाचरपरम् ॥ कोष्टेष्वष्टयुगार्णमारमसहितां मायां च युग्मस्वरानन्तः केसरगां दलेषु विलिखेन्मूलं त्रिपङ्क्तिक्रमात् । त्रिःपाशाङ्कुशवेष्टितं लिपिभिरावीतं क्रमाद्युत्क्रमात्पन्नसेन घटेन पङ्कजमुखेनावेष्टितं तद्बहिः ॥ षटार्गलमिदं यन्त्रं मन्त्रिणां वश्यकरम् ॥ ॥ अन्यदपि यन्त्रम् ॥ लिखेत्सरोजे स्वरकेसराढ्ये वर्गाष्टपत्रे वसुधापुरस्थे । पाशाङ्कुशाभ्यां गुणशः प्रबद्धां मायां लिखेन्मध्यगतां ससाध्याम् ॥ सर्वोत्तममिदं यन्त्रं धारितं कुरुते नृणाम् । सौभाग्यं भाग्यमारोग्यं विजयं वशितां च सत् ॥ पुटीकृते भूमिपुरस्य युग्मे मायां लिखेन्मध्यगसाध्यसंज्ञाम् । मकारकोणेन महीपुरेण संवेष्टितं वश्यकरं तदुक्तैः ॥ मध्ये सार्णविदर्भितं प्रपुटितं मृत्युंजयत्र्यक्षरं क्षान्तस्थं निजसाध्यनाम विलिखेत्किंजल्कसंस्थान्स्वरान् । पत्रेष्वष्टसु नाममन्त्रपुटितं वर्गास्तदग्रेष्वथो यन्त्रं पद्मपुटीकृतं निगदितं मृत्युंजयाख्यं परम् ॥ विषज्वरशिरोरोगनाशनं श्रीजयप्रदम् । कान्तिपुष्टिप्रदं वश्यं सर्वकामार्थसाधकम् ॥ ससाध्यचिन्तामणिमध्यगेहे विलिख्य वाह्येऽनिलगेहवीतम् । प्रवेष्टयेद्बहिरष्टवर्णमन्त्रेण यन्त्रं ज्वरशान्तिदं स्यात् ॥ संप्लवसः शाययसों । अष्टाक्षरमन्त्रः । एष एव भवेद्दक्षो विषजज्वरनाशने । षट्कोणम-

ध्यकोणेषु च ॐ घुरुघुरे स्वाहा इत्यक्षराणि लिखेत्क्रमेण भुजंगनिवारणम् ॥ ॐ ह्रीं मेघलेम्वाहा । अभिगृह्युग्मे पूर्ववल्लिखेत्तद्वैव पन्नग ॥ धूं धूम्रवजिम्वाहा । एतन्मन्त्रं मध्ये षट्कोणेषु च पूर्ववल्लिखेच्चद्वायुगुदेण वेष्टितं हुताशानलवर्णवीतं । विषेण यमकाम्भोभिः प्रेतवर्पटपल्पितम् । श्मशाने निखनेच्छत्रुमुत्पाटयति स भुवम् ॥ अष्टपत्रं पद्मं तन्मध्ये मकारं तत्कोष्ठयुगले साध्यनामकर्म विलिख्य प्राकारकोणेषु च त्रिषु धवगनार्णान् पत्रेषु धूमवतीमन्त्रं घर्मुटिकेन वीतं पश्चाद्वायुबीजद्वयेण वीतं प्रान्तपरेतभूमिनिहितं विद्वेषकारिद्विषां । घर्मुटिके घर्मुटिके ततो मर्कटिके मर्कटिके घोरे विद्वेषकारिणि अघोराघोरयोरमुकयोर्विद्वेषय विद्वेषय हुंफट् ॥ घर्मुटिकेरिता । प्राक्प्रत्यगग्ररेखाचतुष्टयं तथैव तिर्यक्चतुष्टयं लिखित्वा कोणेषचन्द्रलचतुष्टयं लिखित्वा मध्यकोष्ठे वलययुगयुत मध्यपूर्वं तदन्तं वक्ष्यमाणयममन्त्राक्षरान्विलिखेत् ॥ यमराजसदोयेययमेदोरुणदोदय । यदयोनिरयक्षेयक्षेपयनिरामय ॥ उपरिवनाष्टकोष्ठेषु धूमान्धकारमन्त्रं लिखेत् । धूमान्धकारायस्वाहा । अष्टाक्षरो मनुः । शूलेषु द्वादशार्णं । ॐ ह्रीं दष्ट्रिविकृताननाय स्वाहेति लिखेत् । विषवृक्षस्य फलके नृचर्मणि प्रेतपटे वा विलिख्याष्टविषैरेतं श्मशाने निखनेन्निशि । ज्वरेण महताविष्टो मूर्च्छाकुलितमानसः । रिपुर्गच्छति पक्षेण यमलोकं न संशयः । वारादिलुद्रयजलद्विठवर्णवीताटांतान्तरे विलिखिता विधिनैव माया । साध्यावृता वह्निरवो वदनार्धचन्द्रैर्यन्त्रं शिशोरुरुगियं निनिहन्ति सद्यः ॥ षट्कोणे निजसाध्यनामसहितां मायां लिखेन्मध्यतस्तत्कोणेषु विदर्भितामपि लिखेच्छक्तिं स्वसाध्याख्यया । बाह्ये भूमिपुर सकोणमदनं ताम्बूलपत्रे कृतं जप्तं खादयतु प्रियां निशि

भवेत्सा तस्य वश्या चिरम् ॥ शक्तौ नाम लिखेच्चतुर्भिरभितो बीजैः समावेष्टयेत् बीतं शान्तिमनोभवांकुशमसुभौंवीजकैः पिष्टजे । रूपे साध्यनरस्य जप्तपवनं त्रिस्वादुनाभ्यज्य तत्खादेत्तस्य वशं प्रयाति नियतं साध्यः सदा दासवत् ॥ त्रिकोणद्वयं लिखित्वा मध्ये रक्तिनीनमः स्वाहा इति साध्यनाम कर्मसहितं लिखेत्। अनामिकारक्तेन वामहस्ते लिखित्वा पुत्तलीहृदये स्थाप्य रात्रौ शय्यायां अपेत्कामबीजमाकर्षयति स्त्रियम् ॥ षट्कोणं मध्ये नामकर्म अध उपरि हुंकारं कोणेषु च लिखित्वा हरितालेन श्मशानकर्पटे यस्या गृहे स्थाप्यते सा सुभगापि दुर्भगा भवति ॥ त्रिकोणद्वयं भूर्जे गोरोचनया विलिख्य मध्ये नामकर्म ह्रींकारचतुष्टयं दिक्षु विलिख्य घृतमध्ये स्थाप्य यन्त्रगतं मन्त्रं सहस्रं जपेत् स्त्रियमाकर्षयति ॥ त्रिकोणमध्ये अमुकीमगमानयशावं ह्रींस्वाहा इति लिखेत् । स्ववीर्यमनामिकारक्तेनालक्तकेन चैकीकृत्य भूर्जे दूर्वया विलिख्य सिक्थाकृतिमध्ये स्थाप्योत्तानपादेनाक्रम्य शयनस्थो यन्त्रमध्याक्षराणि जपन्स्त्रियमाकर्षयति ॥ कपाले रोचनया पुरुषं विलिख्य तस्य बाहुद्वयाग्रे पाशाङ्कुशौ विलिख्य बाहुमध्ये क्लीं इति कामबीजं हृदये साध्यनामकर्म च शक्तिबीजं मध्ये तदेवोदरेऽपि लिखेत् दक्षिणपादे ह्रीमिति वामे क्रोमिति पादतले एकस्मिन् आं अन्यस्मिन् क्रों इति विलिखेत् । त्रिदिनं त्रिसंध्यं गन्धादिभिः संपूज्य खादिराङ्गारेण तापयन् पाशशक्त्यङ्कुशत्र्यक्षरं जपन्नुर्वशीमप्याकर्षयति ध्रुवम् ॥ दृढ पुराभ्यन्तरे शक्तिबीजं लिखित्वा तन्मध्ये साध्यनाम कर्म च भूर्जे गोरोचनया कोणेषु क्रोंबीजं लिखित्वा मधूच्छिष्टपुत्तलीहृदये स्थाप्य तमेव मन्त्रगतमन्त्रं सप्ताहमष्टोत्तरसहस्रं जपति चेत्सुरवनितामप्याकर्षयति । वश्याकर्षणादौ

हैमादिपट्टे भूर्जे वा गन्धद्वयकस्तूरीगोरोचनाकाश्मीरकर्पूरगजमद-
हरिद्राप्रभृतिभिः स्वर्णलेखन्या तदभावे दूर्वादिना वा लिखेत् । क्रूर-
कर्मसु अष्टविषादिना काकपक्षादिना लिखेन्मन्त्री । भूस्पृष्टं शवस्पृष्टं
वर्षान्तरितमपि त्यजेद्यन्त्रं । सर्वयन्त्राणि प्राणप्रतिष्ठाजपपूजापुरःसरमेव
धर्तव्यान्यन्यथा निष्फलं भवेत् । विस्तरभयादुपरम्यते यन्त्राणा-
मानन्त्यात् ॥ ॥ अन्तर्मातृकां वच्मि प्राग्गुरूपदिष्टाम् । आधारे
स्याच्चतुष्पत्रं स्वाधिष्ठाने तु षट्दलम् । नभौ दशदलोपेतं सूर्यसख्या-
दलं हृदि ॥ कण्ठे षोडशपत्रं तु भ्रूमध्ये द्विदलं तथा । तत्र गुरूप-
देशान्मातृकाक्षराणि विन्यसेत् । स्फटिकप्रवालमुक्ताचामीकरपत्र-
जीवन्तमणिभिः । अष्टोत्तरशतं तदर्धं सप्तविंशतिभिर्वा कुर्याज्जप-
मालिकाम् । मोक्षाभिचारशान्तिकवश्याकर्षेषु यथाक्रमं योजयेत् ।
अङ्गुष्ठाद्यङ्गुलिकासु मणयोऽङ्गुष्ठेन चाल्यन्ते । गृहगोष्ठवनारामनद्यन्ते
देवतालये । समीपे वा गुरोः सिद्धिः सिद्धिः स्यादुत्तरोत्तरा ।
उष्णीषी कञ्चुकी नग्नो मुक्तकेशो गलावृतः । अपवित्रकरोऽशुद्धो वद-
न्क्रोधपरिप्लुतः । अनासनः शयानो वा गच्छन्दुस्थोऽन्यमानसः ।
रथ्यायामशिवे गच्छन्न जपेत्तिमिरान्तरे ॥ एकरत्नं यदि प्राप्तं दैवा-
द्यत्नेन मानुषः । आत्मानं कृतकृत्यं हि मन्यते मूढचेतनः । मञ्जूषा
मन्त्ररत्नानां लब्ध्वा को न प्रमोदते ॥ मन्त्ररूपाणि रत्नानि यत्नादानीय
सुस्थिरम् । बुद्धिरूपेण सूत्रेण ग्रथितानि हितैषिणा ॥ त्रिविक्रमद्वामु-
निना देशिकेन्द्रेण भागिना । निहिता सा कृता माला मञ्जूषाख्ये मया
कृते । ग्रन्थेऽस्मिन्कृतसत्कारे रक्षितव्या मनीषिभिः ॥ भवान्याारा-
धनार्थं हि मालैषा रचिता मया । अनया परितुष्टा सा भवानी
शङ्करप्रिया ॥ अनुग्रहं समग्रं मे प्रयच्छतु कृपानिधिः । रचितोऽयं

~मया ग्रन्थ आत्मविद्यावुभुत्सया । यथाज्ञानं यथाशक्ति सूरयः क्षन्तुमर्हथ ॥ तथाहि ॥ साधवः साधुवृत्तादि सर्वसाधारणा हि ते । कृपालवः परार्थे हि सदैवोशुकचेतनाः ॥ सन्तः सारं प्रगृह्णन्ति सलसारेऽपि हंसवत् । सलिकावदसारं तु सारे सत्यप्यसज्जनाः ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीरामभारतिश्रीचरणपूज्यपाद-
शिष्यस्य भगवत्त्रिविक्रमभट्टारकस्य कृतौ मन्त्ररत्न-
मञ्जूषायां यन्त्रपटलोऽष्टमः सपूर्णः ॥

---

अथ ग्रन्थप्रशस्तिः ॥ दुरितौघकन्दकदनं शुद्धश्रीनिचयविस्फुरन्मदनम् । जगदहितभीतिमर्दनमङ्गलरदनं नमामि गजवदनम् ॥१॥ शुकसनकरयपात्रिप्रमुखमुनिस्वान्तकन्दरीनिलयम् । कमलाजीवितनाथं भवगजपञ्चाननं वन्दे ॥ २ ॥ हरिहरासितसमोद्भवपरंपरामनुसर सद्गुरूदितपद्धतिम् । अयि मनः करुणाकरमिन्दिरारमणमन्न परं परिभावय ॥ ३ ॥ शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणाः । दोषाः प्रयान्तु नाशं सर्वत्र जनः सुखी भवतु ॥४॥ इति ॥

